ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३६ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०११ ई०

प्रधानसम्पादकः

प्रो० वाचस्पति उपाध्यायः

कुलपतिः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३६ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०११ ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

उच्चतरशिक्षाप्रवर्तनायामनुसन्धानस्य महती भूमिकेति नास्ति संशयलेशोऽपि। न केवलं मानवाः अपितु सर्वेऽपि चैतन्यशक्तिसम्पन्नाः प्राणिनोऽनुसन्धानपरायणा भवन्ति निसर्गतः। जीवने सुखाभिलाष एव सर्वान् प्रेरयति तदधिगन्तुं येन खलु सुखावाप्तिः स्यात्। अद्य ज्ञानविज्ञानक्षेत्रे यत् किमपि दृश्यते लभ्यते वा तत्सर्वम् अनुसन्धानस्यैव फलमिति शक्यते वक्तुम्। अस्माकं भारतीयपरम्परायां पूर्वजैः ऋषिभिः विविधैः तपोभिः यदर्जितं तदेवास्माकं मूलम्। तदेव सम्यग् बोद्धुं बुद्ध्वा चान्येषां बोधयितुं प्रवर्तन्ते ऋषिकल्पा आचार्याः। अस्यामेव दिशि आचार्यैर्विकसिता सूत्र-वृत्ति-भाष्यात्मिका पद्धतिः अनुसन्धानदृष्टेरेव परिणामः। यत्र रञ्चमात्रस्यापि विपरीतार्थबोधकस्यावसरो न भवति। अमुमेवाशयं दृढीकर्त्तुं मल्लिनाथो ब्रूते–

**इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।**
**नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ।।**

अनपेक्षितार्थस्य यथा त्यागो बहुधा प्रशंसितस्तथैवापेक्षितस्य परिग्रहोऽपि अन्यथा संशयनिरसनमेव दुष्करं स्यादन्यथा भाष्यकाराणां प्रयोजनमेवासिद्धं स्यात्। फलतः भारतीय-परम्परायां एका काचित् विशिष्टा व्याख्यापद्धतिः प्रवर्त्तिता यस्यां हि सर्वेऽपि जिज्ञासाविन्दवः यथाविधि प्रकाश्यन्ते। तामेव पद्धतिमनुरुन्ध्योच्यते यत्–

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।**
**निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।।**

विषयो विचारार्हवाक्यम्। विशयोऽस्यामर्थो न वेति संशयः। पूर्वपक्षः प्रकृतार्थविरोधितर्कोपन्यासः। उत्तरं सिद्धान्तानुकूलतर्कोपन्यासः। निर्णयो महावाक्यार्थतात्पर्यनिश्चयः। एवं क्रमेण विवेचनं यत्र तदधिकरणमुच्यते। तात्पर्यपर्यन्तप्रसृता पद्धतिरेषा सूक्ष्मातिसूक्ष्मं विवेचनं प्रस्तौति साऽनुसन्धानमतिरिच्य न कदापि प्रवर्त्तते। तत्त्वानुसन्धानप्रवृत्तिशिक्षणायैव प्रवर्तितव्यमस्माभिः सदैव। अनेनैवास्माकं गौरवं संस्कृतस्य च गौरवं संरक्षितं भवति।

तद्दिशि प्रवृत्तेयं शोधप्रभानाम्नी शोधपत्रिका आन्तरदौर्बल्यमपनेतुं स्वस्थैः पथ्योपमैरौषधैर्याव-द्वस्तुबलोदयम्। तदस्याः प्रयासं सङ्कल्पं प्रस्तुतं च नैवेद्यमङ्गीकृत्य सफलयन्तु सुधिय इति।

**प्रो. वाचस्पति उपाध्यायः**
कुलपतिः

# वेदेषु गुरुतत्त्वविमर्शः

**प्रो. रमेशचन्द्रदाशशर्मा**

भारतीयदर्शने गुरुतत्त्वस्य महिमा जेगीयते शास्त्रेषु। वेदस्य बहव्यः शाखाः बिलुप्ताः कालवशादिति समुपलब्धशाखागतमन्त्रब्राह्मणारण्यकोपनिषदामाधारेण गुरुतत्त्वविवेचनं प्रस्तूयते। श्रुतेरिवार्थं स्मृतिरन्वगच्छ-[१] दिति कालिदासवचनानुसारं वेदानामर्थः स्मृतावनुमातुं शक्यते। प्रसङ्गेऽस्मिन् स्मर्यते मीमांसकैः स्मृत्यधिकरणे–

**वैदिकैः स्मर्यमाणत्वात्सम्भाव्या वेदमूलता।**
**विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता॥**[२]

'गृशब्दे "गृ" निगरणे इति क्र्यादि तुदादि परस्मपदी धातुभ्यां गृणति उपदिशति वेदादिशास्त्राणि,[३] गिरत्यज्ञानं वा गुरुः। गीर्य्यते स्तूयते देवगन्धर्वमनुष्यादिभिरिति गुरुः बृहस्पतिः। "अथ स निषेकादिकृद्गुरुः।"[४] इत्यमरः। पुराणोपनिषत्स्मृतिग्रन्थेषु व्याख्यातो गुरुशब्दार्थः प्रायः संहिताब्राह्मणयोराचार्यार्थे पर्यवतिष्ठते तदर्थ संक्षेपात्। अतः श्रुतिस्मृत्योः गुर्वाचार्ययोरर्थः प्रायः समानमेवास्ति। गुरुरज्ञानहर्ता ज्ञानकर्ता च भवति। गुरुशब्देन ज्ञातिबान्धवादयोऽपि गृह्यन्ते। ऋग्वेदे गुरुशब्दः भारार्थमपि बिभर्ति। एवं गुरुशब्दनिष्ठाः विभिन्नार्थाः यथा प्रसङ्गमादाय निर्वक्ष्यते।

गुर्वाचार्ययोः समानार्थता–

**उपनीयगुरुः शिष्यं शिक्षयेच्छौचमादितः।**
**आचारमग्निकार्यञ्च सन्ध्योपासनमेव च॥**

---

१. रघुवंश २.२

२. जै. न्या मा. १.३.१

३. शब्दकल्पद्रुम पृ सं ३४०

४. अमरकोष २ काण्ड ब्रह्मवर्ग श्लो ७

निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥ मनुः २.१४२

अत्र गुरु शब्देन पितोच्यते। अपि च स्मर्यते आचार्यैः-

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥

संहिताब्राह्मणेषु गुरुशब्दः यद्यपि तत्त्वापदेष्टृत्वेन न वर्तते तथापि तत्त्वोपदेष्टुः गुरोः स्थानं यथा महत्त्वपूर्णं भवति तथैव विशेषणरूपेण प्रयुञ्जनः विशेषस्य महत्वं वर्द्धयतितराम्। सर्वत्र गुरुत्वाधायकस्यास्य गुरुशब्दस्य कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते।

**परा हयत् स्थिरं हथ नरो वर्तयथा गुरु।**
**वि यथान वनिनः पृथिव्या व्याशाः पर्वतानाम्।।[१]**

हे नरो नेतारो मरुतो यद्यदा स्थिरं वस्तु पराहथ वृक्षादिकं पराधतं भग्नं कुरुथ गुरूपाषाणादिकं वृक्षत्वेनोपेतं वर्तयथ प्रेरयथ।

**यो नो ग्ने ररिवाँ आघायुररातीवा मर्चयति द्वयेन।**
**मन्त्रो गुरुः पुनरस्तु सो अस्मा अनुमृक्षीष्ट तन्वं दुरुक्तैः।।[२]**

यः शत्रुमर्चयति भर्त्सयति विधेयीकरोति वास्मान् स मन्त्रैकदेशरूपोऽस्म पुनर्गुरुरस्तु। षष्ठ्यर्थे चतुर्थी। प्रयोक्तुरेव पुनर्गरितास्तु। तथा गुरुक्तैर्दुवाक्यैर्निन्दारूपैर्वाचिकैस्तन्वं स्वकीयां तनुमनु मृक्षीष्टः अनुमार्ष्टु। अनुक्रमेण लुम्पतु। प्रयोक्तुरेव गुरुर्गरितास्तु।

**इदं मे अग्ने कियते पावकाऽमिनते गुरूं भारं न मन्म।**
**बृहद् दधाथा घृषतागभीरं यह्वं पृष्ठं प्रयसा सप्तधातु।।[३]**

अत्र गुरुभारं–महद्भारं इत्यर्थः।

**''गुरुद्वेषो आररूषे दधन्ति[४] अत्रापि महद्द्वेषोऽर्थः।**
**''न तं तिग्मं चन त्यजो न तद्रासदभि तं गुरु[५]**
**अत्रापि गुरुशब्दः महदर्थे प्रयुक्तो वर्तते।**

**''यद्वो देवाश्चकृम जिह्वया गुरु मनसोवा प्रयुती देवहडनम्।[६]**
**गुरुदेवहेडनं चकृमः महदपराध देवेभ्यः कुर्म इत्यर्थः।**
**सख्याविव सचावहा अवमन्युं तनोमि ते**
**अधस्ते अश्मनो मन्युमुपास्यामसि या गुरुः।।[७]**

---

१. ऋग्वे १.३९.३
२. ऋग्वे १.१४७.४
३. ऋग्वे ४.५.६
४. ऋग्वे ७.५६.१९
५. ऋग्वे ८.४७.७
६. ऋग्वे १०.३७.१२
७. अ वेद ६.४२.२

**तव ब्रहद् क्रोधं अश्मनोऽधः स्थापयामीति भावः। पूर्ववदर्थः।**
**मानः पाशं प्रति मुचो गुरुर्भारो लघुर्भव।**

**वधुमिव त्वा शाले यत्र कामं भरामसि।[१] पूर्ववदर्थः ( महद्भारः )**
**गुरुमुष्टिना वोक्षति स हि प्रजापत्यतमस्तेनास्य न हुतं भवति।[२]**

**तस्मादाभिरणवीभिः सतीभिर्गुरूं भारं हरति।[३]**

**बृहन्मुष्टिना बृहद्भारमिति आभ्यां गुरुशब्दाभ्यां**
**वृहदर्थ एव प्रतिपादितो भवति।**

अधुना समुपलब्धसंहिताब्राह्मणयोर्यद्यपि गुरुशब्दार्थः बृहद् महद्, गुरुतरः आदि उत्कर्षाऽऽधायकेऽर्थे प्रयुज्यते तथापि विलुप्तासु शाखासु बहुत्र गुरुशब्दः लोकप्रसिद्धे गुरुशब्दार्थे प्रयुक्तो वर्तत इति समुपलब्धप्रमाणादवगम्यते। तद्यथा–

**अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा च।**
**यथैवते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्।।[४]**

**विद्या वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।**
**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्।।[५]**

**स्मृतिरपि जगौ –**

**विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्।**
**असूयकाय मां मादास्तथा स्यां वीर्यवत्तमा।।[६]**

**य आतृणत्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन्**
**तं मन्येत पितर मातरञ्च तस्मै न द्रुह्येत् कतमच्चनाह।।[७]**

---

१. वे ९.३.२४
२. काठकसं २१.२६
३. गो. ब्रा पू. भा. ५.३
४. शाट्यायनीयोपनिषद् ३५
५. शा. उपनि ३३
६. म. स्मृ २.११४
७. निरुक्त १.२.४

**तथा हि स्मृति –**

**य आवृणोत्यवितथं ब्रह्मणां श्रवणावुभौ।**
**स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन॥[१]**

विद्याधिकारी निरूपणवसारे यास्काचार्येण प्रदत्तानि वाक्यानि संगृहीताश्च श्रुतयः शाट्यायनी–योपनिषदि यथावदाम्नाताः सन्ति। एतेन संहिताग्रन्थेषु कुत्राप्यस्तीति दृढमनुमीयते।

उपनिषद्भागे गुरुशब्दः तत्त्वोपदेष्टृत्वेन गृह्यते तत्र कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते।

**''गुरुशास्त्रोक्तभावेन भिक्षोर्भैक्षं विधीयते।[२]**
**''एकमेवाद्वितीयं यद् गुरोर्वक्येन निश्चितम्[३]**
**''सर्वलोकगुरुश्चास्ति सर्वलोकेऽस्मि सोऽस्म्यहम्[४]**

इदं निरालम्बोपनिषदं योऽधीते गुर्वानुग्रहतः सोऽग्निपूतो भवति[५]।

**''ब्रह्मोपदेशः कर्तव्यो भवताय जगद्गुरो[६]**
**श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम्।**
**निदिध्यासनमित्येतत्पूर्णबोधस्य कारणम्।[७]**
**गुरुभक्तिविशुद्धान्तःकरणाय महात्मने**
**सम्यक् परीक्ष्य दातव्यं मासं षणमासवत्सरम्।[८]**
**शुभं वाऽशुभमन्यद्वा यदुक्तं गुरुणाभुवि**
**तत्कुर्यादविचारेण शिष्यः सन्तोषसंयुतः॥**

**गुरुरेव हरिः साक्षान्नान्य इत्यब्रवीच्छ्रुतिः।**
**हंसहंसेति यो ब्रूयाद्धंसो ब्रह्मा हरिः शिवः।**
**गुरुवक्रात्तुलभ्येत प्रत्यक्षं सर्वतो मुखम्॥**
**गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः॥॥[९]**

---

१. म. स्मृ २.१४४
२–४. मैत्रेय्युपनिषत्।
५. निरालम्वोप.
६. शुक्ररहस्यो ३
७. शुकरहस्यो. १३
८. तेजोबिन्दू १०९
९. ब्रह्मविद्यो २७, २९, ३४

अविस्मृत्य गुरोर्वाक्य मभ्यसेत्तदहर्निशम्[१]

पञ्चविंशतिसम्वत्सरं गुरुकुलवासं कृत्वाथ गुर्वनुज्ञया
गृहस्थोचितकर्म कुर्वन् ब्रह्मण्यनिवृत्तिमेत्य।[२]

आधारचक्रमहसा विद्युत्पुञ्जसमप्रभा।
तदा मुक्तिर्न सन्देहे यदि तुष्टः स्वयं गुरुः।।[३]

कर्णधारगुरुं प्राप्य तद्वाक्यं प्लववद दृढम्।।[३]

गुरुरेवपरो धर्मो गुरुरेव परा गतिः।
एकाक्षरप्रदातारं गुरुं यो नाभिनन्दति।
तस्य श्रुतं यथाज्ञानं स्रवत्यामघटाम्बुवत्।।

यस्य देवे पराभक्ति र्यथादेवे तथा गुरौ
स ब्रह्मवित्परं प्रेयादिति वेदानुशासनम्।।[४]
यस्य देवे पराभक्ति र्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मनः।[५]

---

१. योगतत्त्वो ७९
२. नाररदपरिव्राजको द्वितीयोपदेश
३. योगशिखो ६-२६, ७९
४. शाय्यानीयो ३६, ३७
५. योगशिखो २.२२

# यज्ञस्य महत्त्वं तद् विकासक्रमश्च

डॉ. चूडामणित्रिवेदी

यज्ञोऽयं मर्त्यलोके साक्षात् ऐश्वर्यरूपात्मकः[१]। परलोके च स्वर्गप्राप्तेः साधनम्[२] अमरत्वस्य च प्रापकः[३] विद्यते। अत एव च इदं श्रेष्ठतमं कर्म[४]। एतत्सर्वोत्तमस्य अस्य कर्मणः उत्पत्तिः प्रजापतिना सृष्टेः आरम्भकाले देवानां मनुष्याणाञ्च निःश्रेयसे कृता विद्यते[५]। अतः जन्यजनकसम्बन्धस्य अभेदेन यज्ञस्य अपरं नाम प्रजापतिः[६] विद्यते। उपयोगस्य वैविध्येन यज्ञशब्दः यज् धातुना निष्पद्यते। तस्यार्थः देवपूजासङ्गतिकरणदानादयः भवति।

अस्मिन् धात्वर्थे वैदिकयज्ञस्य आधारभूतधारणाया आशयः अव्यक्त एव। शतपथ[७] ग्रन्थे ''विस्तृतो भूत्वा यः उत्पद्यते सः यज्ञः'' इति निगदितम्। अतः यज्ञस्य उत्पत्तिपरकः अर्थः[८] इति मत्वा भारतीयवेदवेत्ता एव हि न अपि तु आधुनिकपाश्चात्यवेदवेत्तापि[९]'' यज्ञस्य मुख्यसम्बन्धः निरन्तरक्रियाशीलसृष्टेः उत्पत्तिविधया स्वीकरोति।

तेषां मते वैदिकयज्ञः वेदानुसारेण अस्य ब्रह्माण्डस्य पिण्डस्य च वैदिकाधारे प्रतीकात्मक शैल्या अवबोधने साधनभूतः। अग्निचितियागस्य विविधब्राह्मणाख्यानेनापि अस्य प्रतीतिः भवति[१०]। क्रान्तदर्शिनः ऋषयः कृतयुगत्रेतायुगयोः सन्धिकाले[११] वेदस्य आधिदैविक[१२] अर्थस्य रक्षणाय इदं

---

१. शत. १/७!२/९-१४
२. मै. सं. १/१०/१०-१४, शी. ३/३, को. ५/१, गौ. नु. १/१९१
३. तै. स. ६/३४/७, श. १/७/३/१, ऐत्र १/१९
४. मै. स. १/१०/१७, तै. १/६/८, का. सं. ३६/११
५. य. वै. १/१/१/१, ४/१
६. गीता ३/१०
७. श. १/७/४/४, कौ. १०/१/१३
८. श. ३/९/४/२३, लैटिन भाषाया: क्रमशः पवित्र, निर्माण, अर्थवाचितौ
९. ऐ. अनु. पृ. ७
१०. डॉ. हीस्टर मैन
११. श. ६-७, मै. सं. ३/१/५
१२. ऐ. अनु. (पृ. उद्धृत महा. भा.) श. २३२/३२

साधनमधिकृतवन्तः। उपलब्धयाज्ञिककर्मकाण्डः एतत् सृष्टिविज्ञानस्य वाहकः इति वक्तुं न पारयामः किन्तु एतेन यज्ञस्य अन्वेषणीयता अत्यधिका भवतीत्यत्र नास्ति सन्देहावसरः।

यज्ञस्वरूपविमर्शः—शब्दनिर्वचनदृष्ट्या "यज्ञ" शब्दः "यज-देवपूजासङ्गतिकरणदानेषु इति धातोः" विच्छ प्रच्छरक्षोनङ् इति सूत्रेण प्रत्यये कृते निष्पद्यते। एतस्यायमर्थः कर्त्तुं शक्यते यद् इन्द्रादिदेवतानिमित्तं यत् पूजनहवनप्रदानात्मकं कर्म तच्छब्देनाभिधीयते। अपि च देशधर्मरक्षायै वेदादिशास्त्रमर्यादायै च क्रियमाणः श्रुतिस्मृतिप्रतिपाद्यविचारसामञ्जस्यरूपो व्यापारविशेषो यज्ञः। एवमेव ऋग्वेदाद्यार्षग्रन्थानां नियमपूर्वकं गुरोः सान्निध्येऽध्ययनं तथा पुनः योग्यशिष्येभ्यस्तत्प्रदानमपि स्वाध्याययज्ञ उच्यते। एवमेव जपयज्ञः याज्ञयज्ञः, दानयज्ञः इति विविधो यज्ञप्रकारो वक्तुं शक्यते।[१]

सम्पूर्णेऽपि भूमण्डले परमात्मनः पूजनमर्चनञ्च येन केनापि प्रकारेण क्रियते तद् "यज्ञ" पदेनैवोच्यते। संक्षेपेण इदं वक्तुं शक्यते यद् ईश्वरार्पणबुद्ध्या क्रियमाणं निखिलमपि कर्म यज्ञो भवति, ईश्वरविरहितं कर्म लोकबन्धकं जायते।

यथोक्तं गीतायाम्—

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्मकौन्तेय मुक्तसङ्गः समाचर॥**[२]

एतदतिरिक्तं श्रौतसूत्रकारेण महर्षिणा कात्यायनेन "अथ यज्ञं व्याख्यास्यामः" इति प्रतिज्ञाय अग्रिमे सूत्रे यज्ञस्वरूपं "द्रव्यदेवतात्यागः" इति सूत्रेण निरूपितं प्राप्यते, तदनुसारं देवतामुद्दिश्य हविष्यान्नपदार्थानां सोमरसादिविधिविहितद्रव्याणां वा अग्नौ परित्यागो याग उच्यते। अत्र भाट्टदीपिकाकारेणाप्युक्तं यत्, यत्र प्रक्षेपाङ्गो देवतोद्देश्यपूर्वको द्रव्यत्यागोऽनुष्ठीयते स यागपदार्थः[३]। भगवता वेदव्यासेनापि मत्स्यपुराणे यज्ञस्वरूपं तथैव परिभाषितमस्ति। तद्यथा—

**देवानां द्रव्यहविषाम् ऋक्सामयजुषां तथा।**
**ऋत्विजां दक्षिणानाञ्च संयोगे यज्ञ उच्यते॥**[४]

यज्ञस्य विकासः—वैदिकयज्ञः स्वीयमहत्तायां यादृशः अप्रतिमः वैविध्ये जटिलतायाञ्च तादृश एव अनुपमः। अग्निहोत्रयागः अन्ययज्ञस्य कल्पनायाः उद्गमः। अनेके विद्वांसः मन्यन्ते यत् व्यष्टेः समष्टित्वप्राप्तिरेव यज्ञस्य विकासः।[५]

---

१. श. ११ तक अण्डः
२. अष्टाध्यायी ३/३/९०
३. गीता ३/९
४. भाट्टदीपिका टीका ४.२.२
५. Sacrifice in the Rigveda (पृ. २८४-२८५)

दैनन्दिन-उपासनया सह प्रजोत्पत्तिः, रोगनिवारणं मत्वा अमृतत्वप्राप्तेः नवीनाकांक्षया दर्शपूर्णमासयज्ञचातुर्मास्ययज्ञयोः कल्पना सञ्जाता। दर्शपूर्णमासयज्ञः मुख्यतया प्रजोत्पत्तिविषयकः शरीररचनायाः विषयेऽपि अस्य प्रयोजनमस्ति[१]। चातुर्मास्यस्य वैश्वदेवः वरुणप्रघासः, साकमेधः तदन्तर्गतपितृयज्ञः क्रमशः मृत्युरोगशत्रूणां सामूहिकप्रयास[२] सम्पादयति।

अत एव एतत् त्रिविधयज्ञस्य मूलभावना प्राचीनतमा विद्यते।[३] सोमयज्ञस्य प्रवर्तनं पश्चाद्वर्त्ती जाता, यतोहि सोमस्य-आहुतिः अनन्तरकाले आरब्धा[४]। किन्तु ऋग्वेदे यजमानाय ''सुन्वतः'' विशेषणं ''अद्रिग्रावा इत्यादि शब्दानां प्रयोगः एतद्विषये स्पष्टं प्रमाणितमस्ति यत् ऋग्वेदकाले एव सोमयागस्य प्रवर्तनं जातम्। ऋग्वेदे[५] अश्वमेधप्रकरणेन पशुयागस्यापि अस्तित्वं सिद्ध्यति। इदं वक्तुं शक्यते यत् प्रायः समेषां यज्ञानां प्रचलनं ऋग्वेदकाले एव सञ्जातम्। यज्ञस्य जटिलतया व्ययसाध्यतया च एतस्य बहुरूपत्वं[६] समापितम्।

एतत् परिवर्तन-परिवर्धनस्य पुष्टिः अन्यरीत्यापि भवति। प्रथमा रीतिस्तु इयं यत् सामान्यतया यज्ञः द्विविधः[७] एकः प्रकृतियज्ञः अत्र च अन्ययज्ञानां परिवर्धितरूपस्य निदर्शनं भजति। दर्शपूर्णमासयज्ञः दृष्टियागस्य प्रकृतियज्ञः, अग्निष्टोमश्चात्याग्निष्टोमः प्राचीनभागः विद्यते। निरुक्तस्य ''पूर्वयाज्ञिक'' शब्दोऽपि[८] अत्र प्रमाणम्। अयं हि शब्दः पूर्ववर्त्ती-परवर्त्ती-याज्ञिकानां परस्परं मतभेदस्य साधकः अस्ति। स्वतंत्रमुख्यदृष्ट्या यज्ञः द्वादशविधः। तत्र- सप्तहविर्यागाः। ते यज्ञाः निम्नाङ्किताः सन्तिः-

१. अग्निहोत्रयागः।
२. दर्शयागः।
३. पूर्णमासयागः।
४. वैश्वदेवयागः।
५. वरुणप्रघासयागः।
६. साकमेधयागः।
७. शुनासीरीययागः।

---

१. श. प्रथमकाण्डः, मै. सं. ४/१, तै. सं. ३/२+९, ३/२-११
२. मै. सं. ९-१/१०/५-१७
३. दर्श च पौर्णमासं च अग्निहोत्रं च धीमतः।
चातुर्मास्यानि चैवासन् तेषु धर्मः सनातनः/ म. भा. २६९/२०
४. Sacrifice in the Revedea P. 284
५. ऐ. अनु. पृ. १०
६. ऐ. अनु. पृ. १०
७. तै. सं. भाष्य १/७
८. नि. ७/६

चत्वारः सोमयागाः। ते च–

१. अग्निष्टोमयागः।

२. राजसूययागः।

३. वाजपेययागः।

४. अश्वमेधयागः।

एतदतिरिक्तः एकः इष्टकायागः अग्निचितिः। सर्वे मिलित्वा द्वादशविधः यागः। एतेषु द्वादशविधेषु यागेषु अनेके अङ्गभूतयागाः आसन् ते कालान्तरे स्वतंत्रयागरूपेण प्रसिद्धाः अभवन्। यथा पितृयज्ञः हविर्यज्ञश्च साकमेधस्य अङ्गयागः यो हि कालान्तरे पितृणां शिवस्य च उपासनायां स्वातंत्र्य व्यवहृतः[१]।

एतावता उपर्युक्तद्वादशविधो यज्ञः कालान्तरे च स्वतंत्ररूपेण ख्यातिलब्धः चतुर्विधयागः मिलित्वा षोडशविधो जातः। कालान्तरे च ख्यातिलब्धाः इमे चत्वारो यज्ञाः– १. पितृयागः २. पशुयागः ३. प्रवर्ग्ययागः। ४. सौत्रामणीयागश्च।

**एतदतिरिक्ताः अग्निष्टोमस्य पञ्च विकृतियज्ञाः[२]।**

१. उक्थ्ययागः। अतिरात्रयागः। षोडशियागः। अत्यग्निष्टोमयागः। आप्तोर्यामयागः।

शतपथग्रन्थे[३] सूत्रग्रन्थे च द्वादशाहस्य, षडहयागस्य, अभिशलवयागस्य, विश्वजित् यागस्य च अनेकसोमयागस्य विवरणमुपलभ्यते। सोमयागस्य विस्तारक्रमे तस्य त्रिधा विभागो जातः। एकाह, अहीन, सत्रभेदेन[४] च। एकस्मिन्नेव दिवसे तृतीयसवनस्य पूर्तौ एकाहः, यदि एकस्मिन् दिवसेन न यज्ञस्य पूर्तिः तदा अहीनः वर्षपर्यन्तावधि पूर्तौ सति सत्रयागः।

अश्वमेधाधारितपुरुषमेधः सर्वमेधौ मुख्ययागौ। किन्तु एतयोः मन्त्राः वाजसनेयी संहितायां[५] ब्राह्मणेषु च तैत्तिरीयब्राह्मणे[६] एव उपलभ्यन्ते। शतपथब्राह्मणश्च[७] अस्याख्यानं प्रस्तौति। सूत्रेषु च इमे शांख्याने वैताने च उल्लिखिताः[८] सन्ति। अस्य पूर्ववर्तित्वं परवर्तित्वं च विवादास्पदम्[९] ऋग्वेदपुरुषसूक्तस्य

---

१. मा. श्रौ. सू. १/१२

२. य. त. प्र. पृ. ८१-८६ अत्र वाजपेयस्यापि उल्लेखः अस्ति।

३. श. ४/५/४/१४

४. तै. सं. मा. १/२००

५. वा. सं. ३०

६. तौ. ३/४

७. श. १३/६

८. शा. सू. १५६/१०/९

९. वै. ध. द. २/ ४३०

भावना[१] पुरुषमेधं प्राचीनतमं समर्थयति। अग्न्याधानयागः न स्वतंत्र अपितु सर्वेषां यज्ञानाम् आधारभूतः किन्तु स्वतंत्रफलत्वेन[२] स्वीयस्वतन्त्रतां सत्तां विधत्ते। अतः अस्य त्रिविधभेदस्यापि स्वतन्त्रतया व्याख्यानं भवति। अस्य त्रिविधभेदः निम्नांकितः–

१. अग्न्याधानम्, २. अग्न्युपस्थानम्। ३. पुनराधानञ्च। सर्वे मिलित्वा एकविंशतिसंख्याकयज्ञाः भवन्ति।

**गोपथब्राह्मणेऽपि[३] यज्ञस्य एकविंशति भेदाः स्वीकृताः सन्ति।**

अग्निहोत्रयागादारभ्य सर्वमेधयज्ञपर्यन्तं यज्ञस्य विकासक्रमे श्रीमद्भगवद्गीतायाः एषः क्रमः द्रष्टव्यः-

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना।। ३८-४४**

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**
**शब्दादीन्विषयान्यन्ये इन्द्रियाग्निषु जुह्वति।। ४०**

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते।।४१**

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः।। ४२**

**अपाने जुह्वति प्राणं प्राणोऽपानं तथापरे।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः।। ४३**

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति।**
**सर्वेप्येते यज्ञविदो यज्ञक्षपितकल्मषः।।४४**

भगवता श्रीकृणेन तपोयज्ञं, योगयज्ञं, प्राणयज्ञं, स्वाध्याययज्ञं, ज्ञानयज्ञादि निरूपणं विधाय यज्ञविकासक्रमं प्रतिपादितम्।

---

१. ऋग्वेदे १०/९०
२. मै० सं. १/६/८, का. सं. ८/१
३. गो. पू. १/१२, ५/२५
४. श्रीमद्भगवद्गीता ४/२४-३०
५. द्रष्टव्य प्रथमाध्यायस्य पृ. १३

# कर्मस्वरूपविमर्शः

प्रो. हरेरामत्रिपाठी

न्यायकोशकारदिशा कर्म त्रिविधं भवति। प्रथमः पदार्थान्यतमः[१] द्वितीयः पुण्यपापजनकः तृतीयम् पाणिनिस्वीकृतकर्म इति। आद्यस्तु एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति[२] कर्मलक्षमणम्। अस्यान्यानि लक्षणानीत्थं सन्ति।

१. मूर्तमात्रद्रव्यसमवेतत्वं कर्मत्वम्।[३]

२. संयोगविभागानुकूलत्वम्।[४]

३. संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मत्वमिति।[५]

४. विभागासमवायिकारणत्वे सति संयोगहेतुत्वम् कर्मत्वम्।[६]

५. नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिरूपं कर्मत्वम्।[७]

६. नित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम् कर्मत्वम्।[८]

७. अनेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मत्वम्।[९]

द्वितीयकर्म तु क्रियते फलार्थिभिः इति कर्म धर्माधर्मात्मकं बीजाङ्कुरवत् प्रवाहरूपेणानादिः। तन्त्रशास्त्रे कर्म षड्विधम् शान्तिकरणम्, वशीकरणम्, स्तम्भनम्, विद्वेषः, उच्चाटनम्, मारणञ्चेति। केचित्तु कर्म त्रिविधम् नित्यं, काम्यं, नित्यकाम्यञ्चेति। तत्र नित्यं कर्म सन्ध्यावन्दनादिः। केवलं

---

१. न्यायकोशः पृ. सं. २०५, २०६, २०७
२. वैशेषिकसूत्रम् १/१/१७
३. तर्क कौ० पृ २०
४. वाक्य० पृ० २२
५. त० दी० १ पृ० ६
६. दि० गु० पृ० १९८
७. वै० उप० १/१/१७
८. ल० व०
९. त० व० परि० १६ पृ० २४०

काम्यं यागादि:। नित्यकाम्यञ्च एकादशीव्रतादीनि इत्याहु:। गीतायां शुक्लकृष्णकृष्णशुक्लभेदेन कर्म त्रिविधं भवति। तत्तु पुण्यपापजनकमिति। तृतीयस्तु कर्त्ता स्वक्रियया यं कारकं अभीष्टतमं मत्वा तं प्राप्तुमिच्छति तं कर्म संज्ञा भवति। अत एव भट्टोजिदीक्षितेनोच्यते

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्म संज्ञं स्यात्। यथा–माषेषु चरन्तमश्वं स बध्नाति इत्यत्र अश्वपति: अश्वं माषक्षेत्रात् अन्यत्र बध्नाति। यतोहि भाषभक्षणेन अश्वस्य हानिर्भविष्यति। ''कर्मणि द्वितीया[१] इति सूत्रेण तस्मात् कर्मण: द्वितीया भवति। कदाचिदनिश्चिततमस्यापि कर्म संज्ञा भवति। यथा विषं भुङ्क्ते इत्यत्र विषानिप्सिततमं वर्तत इति। तदर्थं ''तथा युक्ते चानीप्सिततमम्[२]'' इति सूत्रेण कर्मसंज्ञा भवति। कारकचक्रमिति न्यायग्रन्थमाश्रित्यैव कर्म विवेचनोपक्रमः मया वक्ष्यमाणो वर्तत इति अत एव तत्रैव गच्छामि। भवानन्दतर्कवागीश: कारकचक्रे कर्मण: पञ्चलक्षणानि प्रतिपादितवान्। एतानि सर्वाणि लक्षणानि पूर्वाचार्यैः प्रतिपादितानि सन्ति। तान्यधोलिखितानि सन्ति।

१. करणव्यापार्य्यत्वं कर्मत्वम्।[३]

२. परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वम्।[४]

३. तत्तद्धात्वर्थतावच्छेदकफ़लशालित्वं तत्तद्धात्वर्थकर्मत्वम्[५]

४. तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालि[६] त्वं कर्मत्वम्।

५. परसमवेततत्तद्धात्वर्थान्वर्थान्वयिफलविशेषशालित्वं[७] तत्तद्धात्वर्थकर्मत्वम्।

अत्र वागीशेन प्रथम[८] द्वितीय चतुर्थलक्षणेषु दोषं दर्शयित्वा तत्खण्डितमिति। पञ्चमलक्षणस्य निर्वचनं प्राचीनानां मते कृतवानिति। तृतीयलक्षणं स्वीकृतवानिति तद्ग्रन्थस्यालोडनेन प्रतीयत इति।

**करणव्यापार्य्यत्वं कर्मण: लक्षणम्–**

इदं कर्मण: लक्षणन्तु प्राचीननैयायिका: स्वीकुर्वन्ति। न्यायभाष्यकारनये चत्वारि तत्त्वान्येव

---

१. अष्टाध्यायी २/३/२ वै. सि. कौ. सू सं ५३७ मूल पृ० ५९

२. अष्टाध्यायी १/४/५० वै. सि. कौ सू. ५३८ मूल पृ० ६०

३. कारकचक्रम् पृ० १८

४. तदेव पृ. १९

५. तदेव पृ २०

६. तदेव पृ. २५

७. कर्मत्वन्तु न करणव्यापार्य्यत्वं, नापि परसमवेतक्रियाजन्यफलशालित्वम् यत्तु तत्क्रियाऽनधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्मत्वम् का. च. पृ. १८

८. न्या. वा. ता. टी. १,१, १ पृ. ४२

भवन्ति। प्रमाता प्रमाणं प्रमेयं प्रमितिश्चेति। तत्त्वशब्दस्य निर्वचने वाचस्पतिमिश्रेणोच्यते–

**''तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वम्।''[१]**

उक्तकथनमाधारीकृत्योदयनाचार्येणोक्तम् वाचस्पतिमिश्रनये करणव्यापारविषयत्वं कर्मणः लक्षणम्। यद्यपि उद्योतकरस्य मते यत्कर्मलक्षणं विद्यते क्रियाविषयत्वमिति तत्रैव वाचस्पतिमिश्रः उक्तवान् ''अनात्मसमवेत क्रियाविषयत्वमिति तत्रैव वाचस्पतिमिश्रः उक्तवान् ''अनात्मसमवेतक्रियाफलशालित्वं क्रियाविषयत्वं कर्मत्वमिति इदमेव लक्षणं मिश्रः स्वीकरोति इति प्रतीयते। करणव्यापारविषयत्वं कर्मत्वमिति लक्षणन्तु उदयनाचार्येण स्वीक्रियते इति केचन वदन्ति। उदयनाचार्यस्य परवर्ती शशधरोऽपि तदेव[२] स्वीकरोति। पूर्वोक्तकर्मलक्षणमभिलक्ष्य एव पूर्वपक्षरूपेण करणव्यापार्य्यत्वं कर्मत्वमिति लक्षणं भवानन्देन प्रतिपादितम्। करणव्यापार्य्यत्वं नाम करणजन्यक्रियाऽनुकूल[३] व्यापाराश्रयत्वम्। अत्र जन्यान्तं लक्षणे न दीयते तर्हि क्रियानुकूलव्यापाराश्रयः कर्ता करणञ्चापि भविष्यति तत्रातिव्याप्तिवारणाय कर्मणः लक्षणे करणजन्यत्वं दीयते। करणजन्यत्वस्य कर्मणि एव सत्त्वात् भवति लक्षणसमन्वयः। तथापि उक्तलक्षणस्य ''दात्रेण[४] धान्यं लुनाति''इत्यत्र छिदानुकूलहस्तादिकरणजन्यहस्तसंयोगादिरूपव्यापाराश्रये दात्रे अतिव्याप्तिर्सम्भवति। तस्य वारणं तु न केनापि प्रकारेण कर्तुं शक्यते। अस्मिन् लक्षणे दोषमुद्भावयन् आह श्रीहर्षः करण[५] व्यापारविषयः कर्म? इति चेन्न हस्तेन रामेण बाणेन शरेण विद्धो रावण ''इत्यादावतिप्रसङ्गात्'' अत्र हस्तः शरश्च करणकारकं विवक्षितमस्ति। तथापि तस्य कर्मत्वमुक्तलक्षणेन भविष्यति। तत्रातिव्याप्तिदोषस्य सत्त्वात् तल्लक्षणं न साधु इति भवानन्दतर्कवागीशस्याभिप्रायः। कारकचक्रस्य टीकाकारः जयरामोऽपि[६] तदेव वदति।

परसमवेतक्रियाजन्यफलशालित्वं कर्मणः लक्षणमिति तु वाचस्पतिमिश्रैः उच्यते। प्रकृतलक्षणस्योल्लेख[७] गङ्गेशोपाध्यायोऽपि अनुव्यवसायवादप्रकरणे कृतवानिति। हरिदासभट्टाचार्यः जयकृष्णतर्कालङ्कारोऽपि चेदमेव लक्षणं स्वीकुरुतः। उक्तलक्षणस्य तात्पर्यमिदं विद्यते यत् अभीप्सितकर्मकारकाद् भिन्ने कारके समवायसम्बन्धेन विद्यमाना या क्रिया तस्या जायमानं यत्फलं तदाश्रयस्य कर्म संज्ञा भवतीति। यथा देवदत्तः विद्यालयं गच्छति इत्यत्र विद्यालयः कर्मकारकरूपेण अभीप्सितो वर्तते। तद्भिन्ने देवदत्तकारके गमनक्रिया समवायेन विद्यते। गमनक्रियायाः यत् संयोगरूपं फलमुत्पद्यते तस्याश्रयो विद्यालयो वर्तते। अतः तस्य कर्म संज्ञा भवतीति कर्मणः लक्षणस्य समन्वयो

---

१. कलकत्ता २.२.१६ पृ. ४३७
२. पृ. ९५
३. कारकचक्रम् पृ. १८
४. कारकचक्रम् पृ. १९
५. खण्डनखण्डखाद्यम् (वनारस १९४८) प्र. परि. पृ. १६६
६. का० च. वा० पृ० १०,११
७. परसमवेतक्रियाफलशालित्वं करणव्यापारविषयत्वं वा कर्मत्वम् त० चि प्रत्यक्षखण्ड पृ. ७९५

भवति। परसमवेतपदस्यानुपादाने विनयगोपालः नगरं गच्छति इत्यत्र विनयगोपालेऽतिव्याप्तिर्दुर्वारैवेति। तथाच परसमवेतक्रिया- जन्यफलशालित्वं कर्मणः लक्षणमिति। अत्रापि अव्याप्तिदोषस्योद्‌भावनमाचार्याः कुर्वन्ति। यथा शशधरोऽपि[1] कथयति यत् आत्मानमात्मना जानामि इत्यत्र आत्मा ज्ञानरूपस्य फलस्य आश्रयः अथ च ज्ञानरूपायाः क्रियायाः आश्रयः तदेवात्मा, परसमवेतक्रियायाः तत्राभावात् अव्याप्तिरिति। श्रीहर्षस्य[2] मतमिदमस्ति यदुक्तकारकलक्षणस्य अपादानकारकेऽतिव्याप्तिर्दुर्वारैव। यतोहि वृक्षात् पर्णं पततीत्यत्र पतनक्रियायाः विभागः फलमुत्पद्यते। विभागस्तु वृक्ष एव वर्तते। विभागस्य जनिका क्रिया (पतनाख्या) वृक्षभिन्ने पर्णे विद्यते। पर्णनिष्ठायाः क्रियायाः उत्पद्यमानं विभागरूपं फलं, तस्याश्रयः वृक्षः। अतः वृक्षस्यैव कर्मसंज्ञा भविष्यति तत्र कर्मलक्षणस्य सत्त्वादतिव्याप्तिः आपतति। अत एव अपादानेतरत्वे सति परसमवेतक्रियाजन्यफलशालित्वम् कर्मणः लक्षणमिति। चित्सुखाचार्योऽप्याह ''आपादानव्यतिरिक्तत्वे सति परसमवेतक्रियाफलशालिकर्म''[3] इति नदी तीरे वर्द्धते[4] इत्यत्र तीरे अधिकरणे उक्तलक्षणस्य सङ्गतत्वादतिव्याप्तिः पुनः दुर्वारैवेति। एवं संयोगावच्छिन्नक्रियायाः गम्‌धात्वर्थतया तज्जन्यविभागरूपफलाश्रये पूर्वदेशेऽतिव्याप्तिश्चेत्यपि बोध्यमिति। वृक्षात् पर्णं पततीत्यत्र अधः संयोगजनिका पतनक्रिया ततः जायमानो विभागरूपफलाश्रस्य वृक्षस्य कर्मत्वात् वृक्षः पर्णं पतति इति प्रयोगापत्तेर्दुर्वारैव इति। अनया रीत्यैवात्र अव्याप्त्यतिव्याप्तिदोषमुद्‌भाव्य तन्निराकृतमिति। रघुनाथशिरोमणिस्तु प्रतिपादितवान् -'धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति। [5]''देवदत्तः गोरक्षपुरात् काशीं गच्छति इत्यत्र काशीपदस्यैव कर्मसंज्ञा भविष्यति। यतोहि गमनक्रियातः जायमानस्य उत्तरदेशसंयोगरूपस्य धात्वर्थतावच्छेदकफलस्य आश्रया काशी एव विद्यते। वायसः वृक्षं त्यजति इत्यत्रापि त्यागक्रियातः जायमानस्य विभाग-रूपधात्वर्थतावच्छेकफलस्य आश्रयत्वात् वृक्षस्यैव कर्म संज्ञा भवति न तु वायसस्य। उक्तकर्मलक्षणस्यैव कञ्चिद् परिष्कारं कुर्वन्नाह भवानन्दर्तकवागीशः-

''तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वम्''[6] ''नदी तीरे वर्द्धते'' इत्यत्र वृद्ध धातोरकर्मकत्वात् तत्तद्धात्वर्थतावच्छेदकफलाश्रयत्वं तीरे नास्ति अतः तीरस्य कर्मत्वापत्तिः न सम्भवति।

यदि तत्तद्धात्वर्थतावच्छेदकफलाश्रयस्यैव कर्मत्वं स्वीक्रियते तदा ''वृक्षात् पर्णं भूतले पतति इत्यत्र पत्‌धात्वर्थः अधः संयोगजनिका क्रिया एवञ्च धात्वर्थतावच्छेदकफलमधः संयोगः तस्याश्रयं

---

१. न्यायसिद्धान्तदीप (आधेयशक्तिवादः) पृ २५

२. खण्डनखण्डखाद्यम् ( बनारससं १९४८) पृ० परि पृ. १५७

३. चित्सुखाचार्य खण्डनभावदीपिका पृ० १५९

४. ख. खण्ड खा० प्र० परि० पृ १५९-६०

५. कारकचक्रम् पृ. सं १९

६. कारकचक्रम् पृ० सं. २०

भूतलं तत्र कर्मत्वापत्तिः। फलतः वृक्षात्[१] पर्णं भूतले पतति इत्यस्य स्थाने वृक्षात् पर्णं भूतलं पतति इति प्रयोगापत्तिः। अत्र भवानन्देन भणितम् यः ''वृक्षात् पर्णं पतति'' इति प्रयोगं करोति तदनुसारं पत्धातुः सकर्मको विद्यते। तत्र पत्धात्वर्थतावच्छेदक-अधःसंयोगस्याश्रयं भूतलमस्ति। तस्य कर्मत्वविवक्षायां न कोऽपि दोष इति। ''द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः[२] इति सूत्रेण नरकं पतितः इति नरकपतितः इत्यत्र द्वितीयान्तनरकपदस्य पतितपदेन समासो भवति तेन प्रतीयते यत् पत्धातुः सकर्मक इति। नागेशभट्टोऽपि[३] तदेव स्वीकरोति। यदा धात्वर्थपतनादौ भूतलस्य अन्वयः परम्परयासम्बन्धेन भवति तदा वृक्षात् पर्णं भूते पतति इति प्रयोगोऽपि साधु विद्यते। अत्र नागेशः आह–

वृक्षाद् भूमौ पतति इत्यत्र कर्तृकर्मद्वारा तद्विवक्षाया आधारत्वमिति[४] अत्र केचन अधःसंयोगफलस्य आश्रयत्वेऽपि भूतलादेर्न द्वितीया इति वदन्ति अस्मिन् मते द्वितीयाविभक्त्यर्थ एव फलम्। फलस्य वा अधः संयोगस्य वाचकं न पत् धातुरिति। रामगोपालः ग्रामं गच्छति इत्यत्र संयोगजनकगमनमिति गम्धात्वर्थः। तत्र श्रोतुः जिज्ञासा जायते संयोगरूपफलस्याश्रयःकः? तत्रोच्यते संयोगाश्रयः ग्राम अतः ग्रामस्य कर्मसंज्ञा भवति। पतति इत्यत्र अधःसंयोगजनिका क्रिया पतधात्वर्थः। अत्र श्रोतुः जिज्ञासा एव न जायते यत् अधःसंयोगस्य आश्रयं भूतलमिति। यतोहि अधःसंयोगः अधोदेशात् भिन्नं प्रति निराश्रयो भवति। अतः वृक्षात् पर्णं भूतले पतति इत्येवं साधु प्रयोगः इत्यपि अपरे वदन्ति। अत्र प्राचीनाः वदन्ति पत्धातुः अकर्मक एव भवति। सकर्मकत्वं नाम कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकत्वमिति[५] पर्णं पततीत्यत्र पत् धात्वर्थः व्यापारः तज्जन्यं यत् अधः संयोगरूपं फलं तस्य पर्णे कर्तृकारकेऽन्वयो भवति। अतः पत् धातुः अर्कमक[६] इति। तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वमिति लक्षणस्य ''भूमिं प्रयाति खगः'' इत्यत्र खगेऽतिव्याप्तिः आपतति।[७] अत्र धात्वर्थतावच्छेदकसंयोगस्याश्रया यथा भूमि विद्यते तथैव खगोऽपि वर्तते। यतोहि संयोगो द्विष्ठो भवति तस्याश्रयः यथाभूमिः तथैव खगोऽपि भवति। अतः खगः खगः प्रयाति यद्वा खगं त्यजति खग इति प्रयोगापत्ति दुर्वारैवेति। अत्र रघुनाथशिरोमणिः समादधाति क्रियान्वयिपरसमवेतत्वमेव कर्मप्रत्ययार्थः परसमवेतधात्वर्थजन्यधात्वर्थता-वच्छेदकफलशालित्वं कर्मत्वमिति दीधित उक्ताशयं निरूपयन्नाह भवानन्ततर्कवागीशः।

''एवञ्च परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्, अत एव गमिधातोः पूर्वदेशे न कर्मत्वम् तस्य विभागरूपफलेनानन्यत्वात्, एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्य

---

१. कारकचक्रम् पृ. स. ३७

२. अष्टाध्यायी २, १, २४

३. वैयाकरणभूषणसार (सुबर्थनिरूणम्) पृ. १२०

४. वै भू. सा. पृ. १२०

५ कारकचक्रम् पृ ३८

६. तदेव पृ. ३८

७. तदेव पृ ६७

विजातीयक्रियैवार्थः तस्य चाधः संयोगरूपफलेन नैवान्वयः।[1] तथाच परिष्कृतं कर्मणः लक्षणन्तु-

परसमवेता या तत्तद्धात्वर्था क्रिया तज्जन्यं यत् धात्वर्थतावच्छेदेकं फलं तच्छालित्वम् तत्तद्धात्वर्थकर्मत्वमिति। यद्वा परसमवेतधात्वर्थजन्यधात्वर्थजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मणः लक्षणमिति इदं लक्षणं भवानन्दतर्कवागीशस्य सिद्धान्तलक्षणमिति। नैयायिकास्तु प्रथमान्तार्थमुख्य-विशेष्यकशाब्दबोधं स्वीकुर्वन्ति। अतः चैत्रः पचति इत्यत्र तण्डुलवृत्तिविक्लित्यवच्छिन्न व्यापारानुकूलकृत्याश्रयः चैत्र इति शाब्दबोधो जायते। कौण्डभट्टानुसारमुक्तकर्मलक्षणं गौरवदोषग्रस्तमिति।[2] क्रियाजन्यफलाश्रयत्व[3] कर्मणः लक्षणम्। वागीशस्य यत् कर्मणः सिद्धान्तलक्षणं विद्यते तत्र परवर्तिनः वैयाकरणाः विचिकित्सां प्रदर्शयन्ति। परसमवेतपदं परित्यज्य तत्र क्रियानधिकरणत्वं विशेषणं ददति वैयाकरणाः वा दार्शनिकाश्च। तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वम् कर्मत्वमिति।[4] अस्यार्थः य क्रियायाः आश्रयो न भवति अथ च क्रियाजन्यस्य धात्वर्थतावच्छेदकफलस्य आश्रयो भवति। यथा ''राजगोपालः प्रौद्योगिकी विश्वविद्यालयं गच्छति'' इत्यत्र राजगोपालः गमनक्रियायाः आश्रयोऽस्ति। अतः धात्वर्थताच्छेदकफलस्य संयोगस्य आश्रयत्वेऽपि तस्य कर्मसंज्ञा न भवति इति। इदं लक्षणं भवानन्दतर्कवागीशः न स्वीकरोति। भिन्नभिन्नवाक्येषु प्रयुक्तानि तिडन्तपदानि तत्र धातुतः उपस्थाप्याः याः क्रिया तासां दृष्ट्या द्वितीयाविभक्तेः वा कर्मप्रत्ययानां पृथग् पृथग् अर्थस्य कल्पनया अनन्तशक्तिकल्पनापत्तेः। यथा विनयगोयालः ग्रामं गच्छतीत्यत्र द्वितीयार्थः गमनक्रियाश्रयभिन्नः। खगः वृक्षं त्यजति इत्यादौ द्वितीयार्थः त्यागक्रियाश्रयभिन्नः। इत्थं क्रियाव्यक्तिभेदेन द्वितीयार्थस्यानेकत्वापत्तिः। मल्लो मल्लं गच्छति अत्र एकः मल्लः अपरमल्लं प्रतिगच्छति अत्र अपरमल्लस्य कर्मसंज्ञा न भवितुमर्हति। यतोहि मल्लयुद्धे कर्तृसंज्ञको मल्लः कर्मसंज्ञकश्च मल्लश्चापि गमनक्रियायाः आश्रयो भवति। अतः कर्मलक्षणे ''तत्क्रियानधिकरणत्वे[5] सति'' पदस्योपादाने अभीष्टकर्मसंज्ञके मल्ले उक्तलक्षणस्याव्याप्तिर्भविष्यति। नागेशभट्टोऽपि अत्राव्याप्तिदोषं स्वीकरोति। तैरुच्यते-''तन्न। काशी गच्छन् पथि मृतः' इत्यादौ काश्याः काशीं गच्छति न प्रयागम् इत्यादौ प्रयागस्य, ग्रामं न गच्छति इत्यादौ ग्रामस्य च तादृशफलशालित्वाभावाद् एतस्य लक्षणस्य अत्र सर्वत्र अव्याप्तेः।''[6] तथाचेदं वक्तुं शक्यते यत् प्रकृतलक्षणमव्याप्तिदोषग्रस्तमिति।

प्राचीननैयायिकानां नये धात्वर्थः केवलव्यापारः[7] द्वितीयाविभक्त्यर्थः फलं राजगोपालः विद्यालयं

---

१. कारकचक्रम् पृ० सं. ३४
२. तन्न रोचयामहे, परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। वै. भू. सार पृ. १८१
३. वै.भू.सा. १६९
४. कारकचक्रम् पृ. सं. २५
५. का. चक्रम् पृ. २७, २८
६. परमलघुमञ्जुषा (कारकनिरूपणम्) पृ ३४१
७. वैयाकरणसिद्धान्तमञ्जूषा पृ. ३५

गच्छतीत्यत्र गम्धात्वर्थपादप्रक्षेपादिव्यापारः द्वितीयान्तपदं विद्यालयमित्यनेन विद्यालयवृत्तिसंयोगः इत्यस्य बोधो भवति। खगः वृक्षं त्यजति इत्यत्र त्यज्धात्वर्थः स्पन्दनम् वृक्षपदोत्तर–अम्विभक्त्यर्थः विभागः तथा च वृक्षवृत्तिविभागजनकस्पन्दनानुकूलकृतिमान् खगः इति शाब्दबोधः। ग्रामो गम्यते, ग्रामस्त्यज्यते इत्यत्र गमनम् त्यागश्च व्यापारः स च गम् त्यज्धात्वर्थौ संयोगरूपं फलं विभागरूपं फलञ्च यक् + त –प्रत्ययार्थः। प्राचीननैयाहयिकानां नये फलं न धात्वर्थतावच्छेदकमिति। कुत्रचित् द्वितीयान्तपदाभावे वा कर्मप्रत्ययाभावे अनादितात्पर्यवती लक्षणा स्वीक्रियते। तया लक्षणया संयोगावच्छिन्नगमने गमधातोः अर्थः वा विभागावच्छिन्नव्यापारः त्यज्धात्वर्थ इति। प्राचीन नैयायिकानां नये तु परसमवेततत्तद्–धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वमिति।[1] अभीष्टकर्मकारकात् भिन्नकर्तरि समवायसम्बन्धेन वृत्तिः या क्रिया तादृशक्रियान्वयिफलविशेषस्य यः आशयः तस्य कर्मसंज्ञा भवति। परसमवेतक्रियाजन्य–फलशालित्वम् कर्मत्वमिति लक्षणन्तु पूर्वमुक्तमिति तल्लक्षणन्तु भिन्नमिति।

परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं कर्मणः[2] लक्षणम् अस्मिन् लक्षणे फलस्य विशेषणं धात्वर्थान्वयि विद्यते।

प्रयागात् काशीं गच्छति विनोदः इत्यत्र उत्तरदेशकाश्यामेव प्रकृतकर्मलक्षणस्य समन्वयो भवति। यतोहि प्राचीननये गम्धात्वर्थः गमनव्यापारः तस्य द्वितीयार्थे संयोगेऽन्यवो भवति। विभागरूपफलविशेषस्य उक्तव्यापारेऽन्वयो न भवति। अतः संयोगस्य आश्रयकाशी एव विद्यते। तत्रैव कर्मसंज्ञा अभिहिता इति। एवं सर्वत्रैव लक्षणसमन्वयात् न कुत्रापि दोषः इति। प्रकृत कर्मलक्षणन्तु प्राचीननैयायिकाः स्वीकुर्वन्ति। प्राञ्चस्तु इत्याहुः इत्यनेन अस्मिन् लक्षणे अस्वारस्यं वागीशेन द्योतितमिति।[3]

अत्र कारकचक्रस्य टीकाकारैः जयरामैरुक्तम्–

''तन्न विभागाद्यवच्छिन्नस्पन्दशाब्दत्वस्य जन्यतावच्छेदकत्वे तादृशस्पन्दे शक्तेर्दुवारत्वादिति।''[4] भवानन्दमते कर्म त्रिविधम्[5] प्राप्यं, विकार्य्यं निर्वत्यञ्चे ति। भर्तृहरिरपि ''कर्तुरीप्सिततमं कर्म''[6] इति सूत्रमाश्रित्य निर्वत्यं, विकार्यं प्राप्यञ्चेति त्रिविधं कर्म मन्यते। तथायुक्तं[7] चानीप्सिततम्'' इति सूत्रमाधारीकृत्य कर्मणः चतुर्थं भेदं स्वीकृतवान्–

---

१. कारकचक्रम् पृ. ४३
२. का० च पृ. ३४
३. का० चक्रम् पृ. ३४
४. कारकचक्रम् वा० पृ. १९–२०
५. का. च. पृ. ३५
६. पाणिनी अष्टाध्यायी १/४/४९ सिद्धान्तकौमुदी मू. पृ. ५९ सि. कौ. सू. ५३५
७. पाणिनी अष्टाध्यायी १/४/५० सिद्धान्तकौमुदी मू. पृ. ६० सि. कौ. सू ५३८

**निर्वत्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्।**
**तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्।।**[१]

गमनादिक्रियाजन्यं यत् संयोगादिफलं तस्याश्रयं कर्म प्राप्यकर्म इति। यथा विनयगोपालः चकियाख्यं ग्रामं गच्छति इत्यत्र विनयगोपालस्य गमनक्रियया यत् संयोगरूपं धात्वर्थतावच्छदकं फलमुत्पद्यते तस्याश्रयो चकियाख्यः ग्रामो विद्यते। अतः चकियाग्रामप्राप्य कर्म इति। भर्तृहरिणा उक्तम्–

**क्रियागतविशेषाणां सिद्धिर्यत्र न गम्यते।**
**दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते।।**[२]

नगरमुपसर्पति इत्यत्र नगरस्य विस्तृतत्वात् अल्पपरिमाणवतः। माधवगोपालः तं द्रष्टुं न शक्नोति। अतः नगरे उक्तविशेषस्य दर्शनाभावात् तत् निर्वर्त्यं वा विकार्यं कर्म नापितु प्राप्यकर्म एव इति हेलाराजैरुक्तमिति। वागीशस्य प्राप्यकर्मणः स्वरूपं भर्तृहरिस्वीकृतप्राप्यकर्मवदेव विद्यते।

**विकार्यं कर्म–**

यदा काचिद् क्रिया पदार्थवृत्तिधर्मविनाशकं फलमुत्पादयति। तदा स च पदार्थो विकार्यं कर्म[३] भवति। अत एव भवानन्दैः भणितम्–''क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्यम्। यथा ''काष्ठं लुनाति'' इत्यत्र लूञ् धात्वर्थः छिन्नभिन्नकरणक्रिया काष्ठे विद्यमानानामवयवानां संयोगरूपधर्मं नाशयति। विभागरूपं फलञ्च जनयति। अतः काष्ठं विकार्यं कर्म इति। अत्र केचन आशङ्कन्ते यत् छिन्नभिन्नकरणक्रियातः काष्ठस्यैव नाशो भवति न तु तन्निष्ठस्य संयोगरूपस्य धर्मस्य। तर्हि कथं काष्ठं विकार्यं कर्म इति चेन्न। काष्ठपदमुक्तवाक्ये काष्ठावययेषु लाक्षणिकं, लूञ् धात्वर्थः आरम्भकसंयोगनाशकविभागजनककुठारनिष्ठव्यापारः। तथाचात्र शाब्दबोधस्याकारः काष्ठावयववृत्तिः तद् आरम्भकसंयोगः तन्नाशकविभागजनककुठारनिष्ठव्यापारानुकूलकृतिमान् अयमिति। यथा भवानन्दः विकार्यकर्मणः लक्षणं करोति तथैव भर्तृहरिणा अप्युक्तम्–

**प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।**[४]
**किञ्चित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्।।**

अर्थात् कयाचित् क्रियया कस्यचिद् द्रव्यस्य स्वरूपं नष्टो भवति अथवा कस्यचिद् द्रव्यस्य

१. वाक्यपदीयम् साधनसमुद्देशः ३, ७, ४५ पृ. २६६
२. वाक्यपदीयम् ३, ३, ५१ पृ. २६९
३. कारकचक्रम् पृ. ३६
४. वाक्यपदीयम् पृ. ३, ७, ५० पृ. २६९

गुणस्य वा पूर्वरूपस्य परिवर्तनं भवति तदा तद्द्रव्यं वा स च गुणः विकार्यं कर्म इति। यथा काष्ठानि भस्म करोति'' ''सुवर्णं कुण्डले भवतः'' इत्यत्र काष्ठं, सुवर्णं वा विकार्यं कर्म इति। भवानन्दमते प्राप्यं कर्म, विकार्यञ्च[1] कर्म मुख्यकर्म इति कारकत्वात् क्रियानिष्पत्तौ कारणं भूत्वा क्रियया सह सम्बद्धत्वात् क्रियाजन्यफलाश्रयत्वाच्च। परन्तु भर्तृहरिमते प्राप्यं कर्म, विकार्यं कर्म निर्वर्त्यञ्च कर्म त्रीण्यपि मुख्यानि कर्माणि सन्ति। एतेषां कर्मणामन्तर्भावः इष्टतमेषु कारकेषु भवति। तथाच इदं वक्तुं शक्यते यत् वैयाकरणानां नये त्रयाणां कर्मणां[2] मुख्यत्वं विद्यत इति।

**निर्वर्त्यं कर्म–**

क्रियया यद् निष्पाद्य[3] भवति तदेव कर्म निर्वर्त्यं कर्म इति। यथा ''कटं करोति'' इत्यत्र कटनिष्पाद्यं भवति अत एव तन्निर्वत्यं कर्म इति। भर्तृहरिणा उक्तं यत् अस्तित्वत्यः प्रकृतेः उपादानरूपस्य विवक्षां विनैव निष्पाद्यमानस्य पदार्थस्य कथनं भवति तन्निष्पाद्यं कर्म इति। यथा कटं करोति इत्यादौ कटस्य प्रकृतेः तृणविशेषस्य काशाख्यस्योपादानस्यास्तित्वं भवति। अत्र तृणविशेषस्योपादनत्वेन विवक्षा नास्ति। अतः तृणविशेषात् यन्निष्पन्नं कटः स च निर्वर्त्यं कर्म इति। यस्य निष्पाद्यपदार्थस्य प्रकृते अस्तित्वं न भवति तमपि निर्वर्त्यं कर्म मन्यते।[5] यथा ''संयोगं जनयति,'' विभागं जनयति'' इत्यादौ संयोगविभागौ निर्वर्त्ये कर्मणी स्तः। असत्कार्यवादिनां न्यायवैशेषिकानां सत्कार्यवादिनां सांख्यानाञ्च मतयोः निर्वर्त्यस्य कर्मणः उत्पत्तेः प्राक् स्थितौ मतभेदो वर्तते। तथापि क्रियायाः जायमानं पदार्थं कर्म मन्यते। भवानन्दस्तु महान् नैयायिकः अतः असत्कार्यवादमाश्रित्यैव निर्वर्त्यं कर्म स्वीकरोति। भवानन्दमते निर्वत्यं कर्म अप्रधानकर्म[6] वर्तते। भर्तृहरिमते तत्तु प्रधानमिति। ''कटं करोति'' अत्र 'करोति'' इत्यनेन कृत्याश्रयस्यैव बोधो जायते। यतोहि नैयायिकानां नये कृधात्वर्थः कृतिः, कृधातुना फलावच्छिन्नव्यापारस्य बोधो न भवति। अतः धात्वर्थतावच्छेदकफलस्याश्रयः न कट इति। कटः साध्यरूपेण कृतेः विषयो भवति अतः कटरूपं निर्वर्त्यं कर्म अप्रधानं भवति। एवं घटं करोति इत्यत्रापि धात्वर्थतावच्छेदक–फलाश्रयत्वाभावात् घटस्तु अप्रधानं कर्म निर्वर्त्यमिति। यदि निष्पाद्यत्वं निर्वर्त्यकर्मणः लक्षणमुच्यते तदा घटं पश्यति अत्र दर्शनक्रियातः घटस्य निष्पत्तिर्न भवति। अतः घटं निर्वर्त्यं कर्म इति न मन्यते। स च प्राप्यं वा विकार्यमपि कर्म न भवितुमर्हति अत्र दृश्धातुः सविषयकस्य पदार्थस्य वाचकत्वात् गौणं सकर्मकम् वर्तते। पश्यति क्रियापदस्य कर्म यत् घटो विद्यते। स च दर्शनक्रियायाः विषयत्वात् अप्रधानकर्म इति। अत्र भवानन्दः आह–

---

१. प्राप्यविकार्ययोः कारकत्वात् तादृशफलाश्रयत्वाच्च मुख्यं कर्मत्वम्। कारकचक्रम्। पृ. ३६

२. वाक्यपदीयम् पृ. २६६

३. कारकचक्रम पृ. ३६

४. वाक्यपदीयम् पृ २६७

५. सती वा विद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते।। वाक्यपदीय ३७४

६. कारकचक्रम्, पृ. ३७ निर्वत्यञ्च निष्पाद्यं गौणकर्मत्वम् (सा. समु.) पृ. २६७

"धात्वर्थविधेयत्वे निर्वर्त्यत्वे घटं पश्यति इत्यत्रातिरिक्तकर्मत्वापत्तिः"[१] इति यद्युच्यते धात्वर्थविषयत्वं निर्वर्त्यत्वमिति तदा कटं करोतीत्यत्र वीरणं करोतीति प्रयोगापत्तिर्सम्भवति इति चेन्न। निर्वर्त्यत्वन्तु धात्वर्थविषयत्वमेव।[२] धात्वर्थविषयत्वन्तु उद्देश्योपादानीयविषयतातिरिक्तविषयत्वावच्छिन्ने सति धात्वर्थविषयत्वमिति।[३] निर्वर्त्यकर्मोत्तरद्वितीयार्थः उत्पादकत्वम्। एवञ्च तण्डुलान् ओदनं पचति" इत्यत्र ओदनोत्पादकः यस्तण्डुलनाशकः पाकः तदनुकूलकृतिमान् इति शाब्दबोधोऽत्र भवति। कुष्माण्डं शाकं करोति।[४] दुग्धं दधि करोति" चेत्यादौ विकार्यकर्मोत्तरद्वितीयार्थः नाशकत्वं निर्वत्यकर्मोत्तर-द्वितीयार्थः उत्पादकत्वमिति। तथा च शाकोत्पादिका या तण्डुलनाशिका कृतिः तदाश्रयोऽयमिति, दध्योत्पादिका दुग्धनाशिका या कृतिः तदाश्रयोऽयमिति च बोधो जायत इति। भवानन्तर्कवागीशस्य ग्रन्थाभिप्रायोऽयं यत्–

उद्देश्यताख्य[५] कृतिविषयताभिन्नत्वे सति उपादानत्वाख्यकृतिविषयताभिन्नत्वे सति धात्वर्थविषयत्वमेव निर्वर्त्यकर्मणः लक्षणम्। अर्थात् निर्वर्त्यं कर्म तदेव विद्यते। यस्मिन् कृत्युद्देश्यताख्य वा कृत्युपादानताख्यविषयतातिरिक्ता विषयता विद्यते। धात्वर्थविषयता इत्यत्र धातुपदे तदेव धातुः विवक्षितो विद्यते। यः फलावच्छिन्नव्यापारस्य बोधको नास्ति। अपितु ज्ञानम् इच्छा कृति वा द्वेषश्चेत्यादीनां सविषयकपदार्थानां वाचकं स्यात्। अत एव कारकचक्रे प्रतिपादितं विद्यते। सविषयक-पदार्थाभिधायि जानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणसकर्मकत्वमिति।" स्तोकं पचति इत्यत्र स्तोकं क्रियाविशेषणं विद्यते तथापि धात्वर्थतावच्छेदकफलस्य आश्रयत्वाभावात् तत्र द्वितीया असाधु इति चेन्न तत्र द्वितीयाविभक्तिस्तु साधुत्वार्थकमिति। इत्थं जयरामः जगदीशतर्कालङ्कारः जयकृष्णतर्कालङ्कारश्च अपि स्वीकुर्वन्ति। स्तोकं पचति अत्र स्तोके न कारकत्वं विद्यते। यतोहि अभेदातिरिक्तविभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्। अथवा कर्तृत्वकर्मत्वादिषट्-कान्यतमद्वारा क्रियान्वयित्वं कारकस्य लक्षणम्। जगदीशेन कर्मत्वस्य स्वरूपमधोलिखितरूपेण प्रतिपादितम्।[६]

**यङन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते।**
**यत्रासौ कर्मता नाम कारकं कर्तृतेतरः॥**[७]

अर्थात् यङन्तयद्धातूपस्थाप्ययादृशार्थप्रकारकान्वयबोधो जायते कर्तृताभिन्नस्तादृशोऽर्थः तद्धातूपस्थाप्यतादृशक्रियाकर्मत्वम्। अथवा यद्धातूपस्थाप्ययद्धर्मावच्छिन्न विशेष्यकयादृशार्थ-

---

१. कारकचक्रम् पृ. ३७
२. तदेव पृ. ३७
३. कारकचक्रम् पृ. ३७
४. प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबौधं नैयायिकाः स्वीकुर्वन्ति।
५. कारकचक्रम् पृ. ३७ प. सुधांशुशेखरकृतटिप्पणी पृ. ४८
६. तदेव पृ. २०
७. शब्दशक्तिप्रकाशिका का० ७३ पृ. स ३१६

प्रकारकशाब्दबोधजनिका द्वितीयाविभक्तिः तद्धर्मवत्त्वं तादृशधात्वर्थनिरूपित कर्मत्वम्।[१] गदाधरेण स्वग्रन्थे कर्मत्वविषये यत् प्रतिपादितम्। तन्निरूप्यत-''कर्मणि द्वितीया''[२] इत्यत्र कर्मपदं धर्मपरं सप्तम्यर्थः वाचकत्वमिति।[३] एवञ्च कर्मत्ववाचिका द्वितीयाविभक्तिरिति शाब्दबोधः कर्मत्वञ्च क्रियाजन्यफलशालित्वम्। तत्र धात्वर्थः क्रियाजन्यत्वं संसर्गमर्यादया भासते फलमात्रं द्वितीयार्थः।[४] नव्यमते तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दः गम्याद्यर्थः, द्वितीयार्थः आधेयत्वमिति।[५] न च 'कर्मणि द्वितीया' इति सूत्रविरोधो भविष्यति इति वाच्यम्। अस्मिन् मते कर्मणि इत्यस्य तात्पर्यन्तु फलनिष्ठाधेयत्वान्वयिनि इति। अत्रैव कर्मणः लक्षणन्तु तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वमिति। परे तु मते समवायसम्बन्धावच्छिन्नाधेयता[६] एव द्वितीयार्थ इति। वृत्त्यनियामकसम्बन्धस्य अभावप्रतियोगितावच्छेदकत्वे आधेयत्वं संसर्गो विभक्तेः संख्यामात्रमर्थः[७] फलावच्छिन्नो व्यापारः धात्वर्थः इत्यप्याहुः। फलव्यापारयोः पृथग्धात्वर्थतामते आश्रयत्वमेव आख्यातार्थः इति। घटं जानाति इत्यत्र प्राचीनमते[८] द्वितीयार्थः विषयत्वमिति। पर्वते वह्निमनुमिनोति चैत्र इत्यत्र विधेयत्वं विधेयित्वं वा द्वितीयार्थः।[९] गदाधरभट्टाचार्येणापि कर्मणः त्रिविधत्वं प्रतिपादितम् प्राप्यं प्रकृतिः विकृतिश्च। क्रियाजन्यफलशालि कर्म प्राप्यं कर्म यथोक्तम्-

> **क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।**
> **दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते।।[१०]**

क्रियानिष्पाद्यत्वं यत् तद् कर्म विकृतिरूपम्। यथा पाकादेः ओदनादिः। यस्य असत्त्वरूपविकारेण ओदनादिलक्षणविकारो जायते तत् प्रकृतिकर्म। यथा पाकादेः तण्डुलादिः। कुत्रचित् नाशकत्वमेव[११] द्वितीयार्थो भवति।[१२] नव्यास्तु फलमिव भेदोऽपि द्वितीयार्थः।[१३] द्वितीयार्थः आश्रयत्वमिति[१४] वैयाकरणाः

---

१. शब्दशक्तिप्रकाशिका का० पृ. सं. ३२९
२. वैयाकरणसिद्धान्त कौमुदी कारकप्रकरणम् सूं सं. ५३७ अष्टाध्यायी २/३/२ पृ. ५९ मू.
३. व्युत्पत्तिवादः पृ. सं. २०७
४. व्युत्पत्तिवादः द्वितीयाकारकः (सादर्शव्याख्यासहितः) पृ. सं. २०७
५. फलान्वयिनी वृत्तिरेव द्वितीयार्थः। व्युत्पत्तिवादद्वितीयाकारक पृ. २१६
६. व्युत्पत्तिवादः पृ. सं २२७
७. तदेव पृ. सं. २२९
८. तदेव पृ. २६४
९. तदेव पृ. २७२
१०. तदेव पृ. सं. २९५
११. व्युत्पत्तिवादस्य आदर्शटीका ३३६
१२. व्युत्पत्तिवादः पृ. ३४०
१३. शाब्दबोधमीमांसा द्वितीयार्थवि० भाग पृ० ८९
१४. तदेव पृ. ११०

वदन्ति। तन्न आश्रयतात्वविशिष्टस्याश्रयत्वस्य शक्यतावच्छेदकत्वे गौरवात् आश्रतात्वावच्छिन्नाश्रयत्वस्य वाच्यत्वं न सम्भवति। केचन कर्मत्वस्याखण्डोपाधिरूपं स्वीकुर्वन्ति। तच्च परसमवेतक्रियाजन्यफल-शालित्वसमनियतम्।[१] तन्न प्रकृतधात्वर्थक्रियाजन्यस्य प्रकृतधात्वर्थतावच्छेदकस्य वा फलस्याश्रयत्वेन क्लृप्तेनैव कर्मत्वव्यवहारोपपत्तेः अखण्डोपाधौ तत्र मानाभावः। पदवाक्यरत्नाकरमते परसमवेतक्रिया-विशेषणीभूतधात्वर्थफलाश्रयत्वं कर्मत्वमिति। धात्वर्थतावच्छेदकफलाश्रयतया इच्छाविषयत्वं कर्मत्वम्। इच्छार्थकधातुसमभिव्याहृतद्वितीयायाः मुख्यविशेष्यत्वरूपं कर्मत्वमर्थः।[२] एवं रीत्या विविधमतमाश्रित्य कर्मत्वस्वरूपं मया प्रतिपादितम्।

१. तदेव पृ. १३८
२. तदेव पृ. ३००

# न्यायाभिमतसृष्टिप्रक्रियाविमर्शः

**डॉ. विष्णुपदमहापात्रः**

इह खलु जगति कारणात्कार्यस्योत्पत्तिरिति समेषां दार्शनिकानां मतिः। कारणमन्तरा न कार्यस्योत्पत्तिः कार्यकारणयोः अविनाभावदर्शनात्। तत्रापि केषाञ्चनमतेऽदृष्टस्य जगत्कारणत्वं केषाञ्चननये च ब्रह्मणः जगत्कारणत्वम्, ईश्वरस्य परमाणोः वा जगत्कारणत्वमिति भारतीयदार्शनिकानां वैमत्यं प्रतीयते। तत्र अदृष्टस्य परमाणोः ईवरस्य वा जगत्कारणत्वमिति नैयायिकानां सिद्धान्तः।

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा शतः पुरुषात्केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्।।**[१]

इत्युपनिषत्प्रमाणेन ब्रह्मणः जगन्निमित्तोपादानत्वं साधयन्ति वेदान्तिनः।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।**[२]

इत्यनुसारेण प्रकृतिपुरुषयोः संयोगात् सृष्टिरिति सांख्याः वदन्ति। पुराणे तावत् सृष्टिविषयकं चिन्तनं बहुविधं विद्यते। ''**सर्गश्च प्रतिसर्गश्च . . . .** '' इत्यादि पुराणलक्षणे प्रयुक्तं सर्गपदं जगतः तत्सजातीयपदार्थानां सृष्टिपरकमेव। उक्तं च–

**अव्याकृतगुणक्षोभात् महतस्त्रिवृतोऽहमः।**
**भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते।।**[३]

अभिप्रायस्तु यदा मूलप्रकृतौ लीनभूताः गुणाः क्षुब्धाः भवन्ति तदा महत्तत्त्वस्योत्पत्तिः। महत्तत्त्वतः सात्त्विकादित्रिविधाहंकारस्योत्पत्तिः। त्रिप्रकारकाहंकारात् पंचतन्मात्रस्य, इन्द्रियाणां भूतानां च उत्पत्तिः।

अयमुत्पत्तिक्रमः सर्ग एव। पुराणसृष्टिप्रक्रिया प्रायशः सांख्याश्रिता भवति। पुराणेषु सांख्यशास्त्रस्य प्रभावसत्त्वेऽपि किंचित् स्वकीयं चिन्तनवैशिष्ट्यं विद्यते। यतः प्रकृतिपुरुषयोः द्वैतप्रतिपादकं शास्त्रं सांख्यशास्त्रम्, अद्वैतप्रतिपादकं शास्त्रं च वेदान्तशास्त्रम्, अनयोः चिन्तनयोः सम्मेलनात्मकं चिन्तनं यत्र तदेव पुराणम् इति। पुराणे तावद् विष्णोः प्रकृतिपुरुषभेदात् रूपद्वयं विद्यते। विष्णोः अपरं च रूपं

---

१. मुण्ड १/१/७
२. सां का. २१
३. भाग. का. २१

भवति कालात्मकम्। त्रयाणां तत्त्वानां संयोगात् संसारस्य सृष्टिः। संयोगनाशात् प्रलयः। तथाहि विष्णुपुराणे–

**विष्णोः स्वरूपात् परतो हि ते द्वे रूपं प्रधानं पुरुषस्य विप्र।**
**तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं यद् द्विज कालसंज्ञम्॥**[१]

विषयाणां रूपान्तरमेव कालस्य आकारः। कालस्य अनादित्वाद् अनन्तत्वात् निर्विशेषत्वाच्च तं कालं निमित्तिकृत्य भगवान् विष्णुः सृष्टिं करोति। महाप्रलयाभावादनादिकालतः अयं सृष्टिक्रमः प्रचलति।

सृष्टेः प्राक् समग्रविश्वं भगवतः मायायां लीनं भूत्वा ब्रह्मस्वरूपे आसीत्। कालवशाद् भगवान् सकीयया चेष्टया पृथग् पृथक् सृजति। विश्वस्य अनादित्वे प्रमाणं यथा–

**यथेदानीं तथाग्रे च पश्यदप्येतदीदृशम्**[२]

यदि विश्वं तथा भवेत् तर्हि तस्य प्रलयोऽपि नास्ति। तस्य प्रवाहस्य नित्यत्वादिति। पुराणनये प्राकृतसर्ग-वैकृतसर्ग-प्राकृतवैकृतसर्गभेदात् प्रधानतः सर्गः त्रिविधः। अबुद्धिपूर्वीका या सृष्टिः सा प्राकृतसृष्टिः। बुद्धिपूर्वीका सृष्टिः वैकृतसृष्टिः। उक्तं च–

**प्राकृतश्च त्रये पूर्वे सर्गास्तेऽबुद्धिपूर्वकाः।**
**बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पंचवैकृताः॥**[३]

यद्वा भवतु सर्गस्य मूलकारणं विष्णुरेव भवति। एतेन सिद्धं भवति यद् दार्शनिकाः पौराणिकाश्च सृष्टेः मूलकारणं किमपि तत्त्वमस्तीति आमनन्ति। कारणात् कार्यस्योत्पत्तिरिति नाभ्युपेयते चेत्तर्हि नियामकस्य विरहात् सर्वदा समेषां कार्याणामुपलब्धिरनुपलब्धिर्वा आपद्येत। तस्मात् किंचित्कालासम्बन्धित्वे सति किंचित्कालसम्बन्धित्वरूपकादाचित्कत्वं कार्यमात्रेषु प्रेख्य कार्यं सापेक्षम्। कारणजन्यं कादाचित्कत्वात् यन्नैवं यथा नभ इति रूपेण सापेक्षत्वं तत्रानुमाय यदपेक्ष्यते तत्र कारणत्वं निश्चीयते।

संक्षेपतः सिद्धेः कार्यकारणभावे इह संसारे सुखिनं दुःखिनं च जनमवलोक्य प्रतीयते यदत्रापि केनापि कारणेनावश्यं भाव्यम्। तयोश्च सुखदुःखयोः दृष्टं कमपि हेतुं नैवावलोकमानो जनः सुखदुःखकार्यकारणत्वेन जीवात्मनिष्ठं धर्माधर्मात्मकमदृष्टं परिकल्पयन्ति नैयायिकाः। यस्मिन्नात्मनि समवायेन धर्मः सन्तिष्ठते तस्मिन् समवायेन सुखमुत्पद्यते। यत्र च समवायेनाधर्मस्तिष्ठति तत्र दुःखमुत्पद्यते। नहि केवलेन दृष्टेन हेतुना दुःखसुखादिवैचित्र्योत्पत्तिः। एकस्मिन्नेव परिवारे दृष्टहेतूनां समेषां समानत्वेऽपि पूर्वजन्मकृतकर्मजन्यादृष्टवशात् तत्परिवारस्य जनेषु कश्चित्सुखी कश्चित् पुनर्दुःखी लोचनगोचरो भवति।

---

१. विष्णु १/२/२४

२. भाग ३/१०/१३

३. शिव. १/१२/१८

तत्र सुखदुःखादिभोगवैचित्र्यं नैवादृष्टेन विना केनाप्युपायेन साधयितुं बृहस्पतिरपि क्षमः। अदृष्टस्य परलोकसाधनं नास्तीति इयं चार्वाकस्य विप्रतिपत्तिः, एतत्फलमलौकिके वा वस्तुनि परलोकसाधनता अस्ति न वा? अतीन्द्रियस्तु परलोकसाधनं न वेत्यादि संशयः, एतादृशसंशय-निरासार्थमतीन्द्रियवस्तुनः साधकयुक्तेः प्रयोगः आवश्यकः। ये खलु अलौकिकं कारणमदृष्टादिकं न स्वीकुर्वन्ति तेषां कृते अलौकिककारणसाधनमावश्यकं भवति। तत्सिद्धावेव प्रतिवादिनोऽपि एतादृशकारणप्रेरकत्वेन तदधिष्ठातृत्वरूपेण ईश्वरं स्वीकुर्वन्ति। अचेतनवस्तुमात्रं चेतनाधिष्ठितं सत् कार्यस्य कारणं भवति, चेतनप्रेरणां विना न कार्यकारणं भवति, अदृष्टस्य कारणत्वसाधनावसरे उदयनः प्रवदति–

**सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः।**
**प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः।[१]**

सापेक्षत्वादनादित्वादित्यादयस्तु भोगं प्रति कारणत्वाद् अदृष्टात्मकालौकिकस्य कारणत्वं विद्यत एव।

प्रशस्तपादाचार्येण काणादीयं सूक्ष्ममनोभावं केषांचित् सूत्राणां माध्यमेन अनुनिशम्य पृथिव्यप्तेजोवायुपदार्थनिरूपणानन्तरमेतेषामेव हि परमाणूनां संघातेन सृष्टिः विघातेन च प्रलय इति। तमेवग्रन्थमनुसरद्भिः व्याख्याकारैः श्रीधराचार्यादिभिः स्वटीकायां उच्यते यत्–पंचदशनिमेषाः काष्ठाः त्रिविंशतिः काष्ठाः कला, पंचदशकलाः नाडिका, त्रिंशत्कलामुहूर्तः, त्रिंशत्मुहूर्त्तमहोरात्रः पंचदशाहोरात्रा पक्षः।

द्वौ पक्षौ मासः, द्वौ मासर्तुः षट् ऋतवो द्वादश मासाः, ऋतुत्रयेणोत्तरायणम्, ऋतुत्रयेण दक्षिणायणम्, उत्तरायणं च देवानां दिनम्, दक्षिणायनं रात्रिः, तथाभूताहोरात्रशतरात्रेण षष्ट्यधिकेन वर्षम् द्वादशसहस्रैश्च वर्षैश्चतुर्युगम्, चतुर्युगसहस्रपरिमितं ब्रह्मणो दिनम्। उक्तं च

**मानुषेनैकवर्षेण देवानां दिनमुच्यते।**
**तेषां शतत्रयं षष्टियुक्तं वर्षस्तु दैवतः॥**
**देववर्षसहस्राणि द्वादशाहश्चतुर्युगम्।**
**चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते॥**

इत्यादि स्मृतिवचनानि ब्रह्मणो दिनपरिमाणे मानम्। सर्वज्ञविशिष्टस्य महेश्वरस्य आत्मनां सुखदुःखानुभवोत्पत्तये सिसृक्षा जायते। तदनन्तरं स्वात्मसु विद्यमानानि अदृष्टानि वृत्तिं लभन्ते। यद्यपि ईश्वरस्य अनन्तकार्योत्पत्तौ व्याक्रियमाणाः नित्यत्वाद् एकैव इच्छा क्रियाशक्तिस्वरूपा, सैवेच्छा संहारकारणेषु चोपलब्धेषु संजीहिर्षारूपा भवति। सृष्टिकारणेषु चोपलभ्यमानेषु सिसृक्षारूपा जायते। एतादृशसिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यः आत्मपरमाणुसंयोगेभ्यः पवन परमाणुषु कर्माण्युत्पद्यन्ते। पवनपरमाणवस्तत्र समवायिकारणम्। लब्धवृत्त्यदृष्टवदात्मपरमाणुंसंयोगोऽसमवायिकारणम्। अदृष्टं च निमित्तकारणं भवति। एवं च कर्मोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगेभ्यः द्व्यणुकानि जायन्ते। तदन्तरं त्रसरेणुः इत्यादिक्रमेण महान् वायुः समुत्पद्यमानः आकाशे दोधूयमानस्तिष्ठति। ततश्च

१. न्या. कु. १/४ (का. व्या.)

तस्मिन्नेव दोधूयमाने वायु जलीयेभ्यो परमाणुभ्यो परस्परं संयोगेभ्यो द्व्यणुकादिक्रमेण समुत्पन्नजल-निधिस्तिष्ठति।

तदनन्तरं तस्मिन्नेव जलनिधौ पार्थिवपरमाणुसंयोगेभ्यः द्व्यणुकादिक्रमेण समुत्पन्ना महापृथिवी सन्तिष्ठति। तदनन्तरं च तस्मिन्नेव जलनिधौ तैजसेभ्य अणुभ्यो द्व्यणुकादिक्रमेणेत्पन्नो महांस्तेजोराशिः देदीप्यमानस्तिष्ठति। अनया रीत्या समुत्पन्नेषु महाभूतेषु महेश्वरसंकल्पात् पार्थिवपरमाणुसाहाय्येन तैजसपरमाणुभ्यः महदण्डमुत्पद्यते। तस्मिन्नेवाण्डे चतुर्वदनकमलं ब्रह्माणं संस्थाप्य तं प्रजा सर्वे विनियुंक्ते स च ब्रह्मा मनुदेवर्षिपितृगणान् समुत्पाद्य एव स्व स्व कर्मानुसारं धर्मज्ञानवैराग्यैश्वर्ये सर्वान् संयुनक्ति। अनया रीत्या सर्गक्रमः वैशषिकदर्शने प्रदर्शितः विद्यते।

परमाणुभ्यः जगतः सृष्टिः इति वैशेषिकैः यदुपपादितं तन्नाङ्गीकुर्वन्ति वेदान्तिनः। तेषां मते तमोगुणस्य प्राधान्यात् यत्किंचिद्रजस्सत्त्वसम्पन्नाद् विक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः, आकाशाद् वायुः, वायोरग्निः, अग्नेर्जलम्, जलात्पृथिवी चोत्पद्यते। तथा च श्रुतिः 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। एतेन दैवात्मशक्तिं स्वगुणैर्निर्गूढाम्' इति श्रुत्या ज्ञानस्य गुणत्रययुक्तत्वेऽपि तमोगुणप्राधान्यादेव कथमाकाशाद्युत्पत्तिरिति शंका अपास्ता। एवं च परमाणुः सृष्टेः कारणं इति वादिनां मतं न युक्तं तथा च वेदान्तसूत्रम्–

**''मदद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्, उभयथाऽपि न कर्मतस्तदभावः, समवायाभ्यु-पगमाच्च साम्यादनवस्थितेः नित्यमेव च भावात्, रूपादिमत्त्वाच्च विपर्ययो दर्शनात्, उभयथा च दोषात्? अपरिग्रहाच्चात्यन्तमनपेक्षा''।**[१]

उक्तवेदान्तसूत्रं प्रदर्श्य वैशेषिकमतं यदपाकृतं वेदान्तविद्भः तन्न युक्तमिति प्रदर्शयन्ति प्रशस्तपादाचार्याः। परमेश्वरेच्छावशात् प्रलयकालेऽदृष्टं प्रतिबद्धशक्तिकम्, सृष्टिकाले लब्धवृत्तिकं भवतीति स्वीकारान्न सर्वदा प्रवृत्तेर्न वा सर्वा निवृत्तेः प्रसङ्गः इति। उत वा ब्रह्मकारणवादेऽप्येवं विकल्पे ब्रह्म स्वेच्छया कालविशेष प्रवर्तते निवर्तते च परमाणव तुल्यमुत्तरमिति।

**'ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्, न पुरुषकर्माभावे फलनिष्पत्तेः, न तत्कारित्वादहेतुः**[२] इति त्रिभि सूत्रैः ईश्वरस्य जगत्कारणत्वं साधितं नैयायिकैः। पुरुषोऽयं समीहमानः नावश्यं समीहाफलमवाप्नोति तेनानुमीयते पराधीना पुरुषस्य कर्मफलावाप्ति इति यदि परापेक्षां विना पुरुषः कर्मफलभोगे समर्थः स्यात् न कदाचित् निष्फला क्रिया भवेत् तस्माद् यदधीना पुरुषस्य कर्मफलप्राप्तिः स ईश्वरः कारणम् इति। न्यायसूत्रकारेण निमित्तकारणमीश्वर इत्यभ्युगतः। यच्च निमित्तं तदितरयोः समवायिकारणासमवायिकारणयोरनुग्राहकं यथा तुरीवेमादि तन्तूनां तत्संयोगानां च ईश्वरश्चेज्जगतो निमित्तं जगतः साक्षादुपादानकारणं किमिति चेत् परमसूक्ष्मं परमाणुसंज्ञितं पृथिव्यादिद्रव्यम्। परमाणुकर्माणि प्राक्प्रवृत्तेः बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति यथा वास्यादि

---

१. ब्र. सू. २/२/१२-१७

२. न्या. सू. ४/१/१९-२१

अचेतनं बुद्धिमता तक्ष्ण अधिष्ठितं प्रवर्तते तथा अचेतनानि परमाणुकर्माणि जगत्सृष्टौ प्रवर्तमानानि बुद्धिमत्कारणाधिष्ठितान्येव प्रवर्तन्ते इति उद्योतकराणामाशयः।

सृष्ट्युत्पत्तिविषये हिरण्यगर्भसूक्तस्यापि अतीवमहत्त्वं विद्यते तत्र वैज्ञानिकतत्त्वमप्युपलभ्यते। अस्मिन् सूक्ते जगदुत्पत्तेः पूर्वं वर्तमानो लोकत्रयस्य धारकश्चालकः स्वामी जीवात्मनां ज्ञानदाता अमृतंरूपं च तच्छरणं कामानां पूरयिता परमाणून् प्रेरयिता इत्यादि सर्वमुपदिष्टं वर्तते।

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।**[१]

हिरण्यशब्दः हिरण्यपर्यायः '**हिरण्यो हिरण्मयोः**[२] इति निघण्टुवाक्याद् ज्ञायते। 'मयट् प्रत्ययस्य लोपश्छान्दसः' हिरण्याः प्रकाशमयाः—सूर्यादयो गर्भे—गर्भसदृशे मध्येऽस्य स हिरण्यगर्भः—'हिरण्यानि सूर्यादि तेजांसि गर्भे यस्य स परमात्मा।[३] स परमात्मा उत्पन्नस्य जगतः प्रसिद्ध एक एव स्वामी पालकोऽस्ति। स जगतः पूर्वमेव सम्यक् वर्तते वर्तमानो भवति हि स खलु अन्तरिक्षम् 'पृथिवी—अन्तरिक्ष—नाम्न'[४] इति। द्युलोकमपि चेमां पृथिवीं धारयति सुखस्वरूपाय प्रजापतये परमात्मने 'प्रजापतिर्वै कः[५] सुखं वै कः[६] उपहाररूपेण स्वात्मानं समर्पयेम।

सृष्टेरादौ महान्तः खल्वाप्ताः परमाणवः 'आपो ह वा इमदग्रे यत्तत्सलिलमासीत्' 'तम आसीत् तमसा गूल . . . . सलिले सर्वमा इदम्' अग्निमाग्नेयपदार्थमुत्पादनहेतो गर्भं धारयन्तः विश्वं प्रति प्रकटी भवति पुनः समस्तदेवानां विश्वं तदादेशं पालयति। सर्वे देवाः तस्यांशभूताः यस्याश्रयः अमरत्वप्रदायकः यस्याश्रयः अमरत्वप्रदायकः मृत्युरपि यस्य अधीनं भवति। समस्तमपि द्विपादवर्गं चतुश्पादवर्गं च शास्ति। सर्वे हिमाच्छादिताः पर्वता यस्य महन्त्वस्य प्रतीकभूताः सन्ति सरित्समुद्राप्यस्तु यस्य महिमानं वर्णयन्ति। एवं भूतः परमात्मा—'यस्मात् परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति। कश्चिद्। वृक्ष इव स्तब्धस्दिवि तेष्ठेत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।[७] स एव त्रैलोक्य सम्पूर्णस्य जगतः पदार्थानां वा रचयिता पालयिता धर्ता संहर्ता वा वर्तते। अस्मात् सूक्ताद् परमेश्वरस्य निमित्तकारणत्वं स्पष्टं द्योतते।

यथा परमेश्वरस्य जगन्निमित्तिकारणत्वं सिद्ध्यति तथैव परमाणोरपि जगत्कारणत्वमस्तति वेदः प्रतिपादयति—

---

३. ऋ. १०/१२१/१
४. निघ. १०/२३
५. यजु. २५/१०
१. निघ. १/३
२. ऐ. ब्रा २/३६
३. गो. ब्रा. ६/३
४. श्वे. ३.३/९

**विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतो पात्।**
**संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः॥**[१]

इत्यस्य मन्त्रस्य तृतीयपादे 'पतत्र' शब्दस्य यो हि प्रयोगः तस्यार्थः परमाणुः। परमाणूनां गतिशीलत्वात् गत्यर्थकपत् धातुना निष्पन्नोऽयं पतत्रशब्दः परमाणुवाचकः इति वैदिकमन्त्रेण विज्ञायते। यतः मन्त्रस्य परार्द्धवाक्ये 'पतत्रैः परमाणुभिः संजनयन् समुत्पादयन् संधमति संयोजयति' इत्याकारिकायाः व्याख्यायाः दर्शनात् परमाणुबोधकं श्रुतिप्रमाणमस्ति इति निश्चप्रचं वक्तुं शक्यते। अस्य मन्त्रस्य व्याख्यानावसरे उदयनः प्रवदति-'षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं ते हि गतिशीलत्वात् पतत्त्रव्यपदेशाः पतन्तीति। संधमति-संजनयति इति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति समुत्पादयन्नित्यर्थः।[२] एवं च परमाणूनां जन्यत्वे श्रुत्यभावात् नित्यत्वे च विरुद्धश्रुतेः अभावाद् अनुमानेन तस्य नित्यत्वं जगत्कारणत्वं च साधयितुं शक्यते।

१. श्वे. ३.३/३
२. न्या. कु. ३/३ (व्याख्या)

# अथातो ब्रह्मजिज्ञासा इति सूत्रार्थविमर्शः

डॉ. महानन्दझा

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य आदिमं सूत्रम्- अथातो ब्रह्मजिज्ञासा[१] इति। अथ-अनन्तरम्, अतः साधनचतुष्टयसम्पत्तेर्हेतोः, नित्यफलावाप्तये, ब्रह्मजिज्ञासा इति। अथ-अनन्तरम्, अतः-साधनचतुष्टयसम्पत्तेर्हेतोः, नित्यफलावाप्तये, ब्रह्मजिज्ञासा कर्त्तव्या। मङ्गले अनन्तरे प्रश्ने कार्त्स्न्ये एतेष्वर्थेषु अथ शब्दः प्रयुज्यते। अत्र च अथ शब्दः आनन्तर्यार्थकः न तु अधिकारार्थः। अधिकारः प्रारम्भः ब्रह्मजिज्ञासायाः अधिकार्यत्वात्। ब्रह्मविषयक ज्ञानेच्छा हि जिज्ञासा। सा च नात्र प्रत्यधिकरण-मभिप्रेतम्। न च मङ्गलार्थः अथशब्दः मङ्गलस्य वाक्यार्थे समन्वयाभावात्। अथ शब्दः वाच्यमपि मङ्गलं न भवति अपितु अर्थान्तरे प्रयुज्यमान एव अथ शब्दः श्रुत्या मङ्गलप्रयोजनो भवति। यथा-अन्यार्थं नियमानमपि दध्यादि दृष्टं मङ्गलकारकं भवति।[२] न च पूर्वप्रकृतापेक्षायामथशब्दः पूर्वं प्रकृतं प्रारब्धं तदपेक्षया अथ शब्दः यदि प्रयुज्यते तदा सः पूर्वप्रकृतापेक्षः उच्यते। आनन्तर्यपूर्वप्रकृतापेक्षयोश्च फलतः कश्चित् भेदो नास्ति, प्रश्नाद्यर्थस्य च असम्भवादेव न अथ शब्देन परिग्रहणम् तस्मादानन्तर्यमर्थः। एवं सति जिज्ञासा जायते कस्मादनन्तरं ब्रह्मजिज्ञासा कार्या? यथा-अथातो धर्मजिज्ञासा[३] इत्यत्र धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेन अपेक्षते तथा इहापि ब्रह्मजिज्ञासा पूर्वप्राप्तं नियमेन किमपेक्षते? न च स्वाध्यायाध्ययनम्, स्वाध्यायानन्तर्यं वेदाध्ययनमित्यर्थः तस्य समानत्वात्। ननु वेदाध्ययनस्य उभयत्र मीमांसयोः समानत्वेऽपि ब्रह्मजिज्ञासायाः कर्मावबोधानन्तर्यं भविष्यति। कर्मावबोधानन्तरं ब्रह्मजिज्ञासा कर्त्तव्या इति चेन्न, कर्मावबोधात्प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासा भवति। कर्मावबोधे सत्यपि जिज्ञासा क्वचिन्न दृश्यते। न च धर्मब्रह्मजिज्ञासयोः क्रम विवक्षितः येन प्रथमं पूर्वमीमांसाध्ययनं तदनन्तरमुत्तरमीमांसा इति। न च उभयोः मीमांसयोः शेषशेषीभावः अधिकृताधिकारभावो वा सम्भवति, उभयोः मीमांसाशास्त्रयोः पृथक्शास्त्रत्वात्वात् फलजिज्ञास्यभेदाच्च। तथा हि ब्रह्मजिज्ञासाफलं मोक्षः धर्मजिज्ञासाफलं स्वर्गः एकत्र जिज्ञास्यं ब्रह्म एकत्र च कर्म। अतः उभयोः शास्त्रयोः नैकत्वम् तस्मात् किमपि वक्तव्यं यस्मिन् पूर्ववृत्ते जिज्ञासा भवत्येव, यस्मिंश्च रहिते जिज्ञासा न जायते। किं तत्? उच्यते-नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्चेति।[४] तेषु

---

१. ब्रह्मसूत्रम् १.१.१

२. अर्थान्तरेषु आनन्तर्यादिषु प्रयुक्तोऽयं शब्दः आन्त्या अवर्णमात्रेण वेणुवीणाध्वनिवत् मंगलं कुर्वन् मङ्गलप्रयोजनो भवति। भामती २६

३. जैमिनिसूत्रम् १.१.१

४. तत्त्वबोधः।

हि सत्सु कर्मावबोधाभावेऽपि तद्भावे वा शक्यते ब्रह्मजिज्ञासितुं ज्ञातुं च। तस्मात् अथशब्देन साधन-चतुष्टयसम्पत्यानन्तर्यमुपदिश्यते।

अतः शब्दः हेत्वर्थः। साधनचतुष्टयसम्पत्यनन्तरम्, अतः अस्मात् कारणात् ब्रह्मजिज्ञासा कर्त्तव्या। यस्मात् कारणात् वेदे एव अग्निहोत्रादिकर्मणाम् अनित्यफलकत्वं दृश्यते तद्यथेह कर्मचितो लोकः क्षीयते। एवमेव अमुत्र पुण्यचितो लोकः क्षीयते''।[१] अनुमानमपि भवति स्वर्गादिफलमनित्यं कर्मजन्यत्वात् कृश्यादि कर्मफलवत् तथा वेद एव विज्ञानात् परमपुरुषार्थं निःश्रेयसं दर्शयति, ब्रह्मविदाप्नोति परम्।[२] तस्मात् कर्मफलमनित्यं ब्रह्मविज्ञानफलञ्च नित्यम्। अतः निःश्रेयसार्थं मुमुक्षुभिः पूर्वोक्तसाधनचतुष्टयसम्पत्यनन्तरं ब्रह्मजिज्ञासितव्यम्।

ब्रह्मणः जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी न शेषषष्ठी जिज्ञास्यापेक्षत्वात् जिज्ञासायाः। जिज्ञास्यमत्र ब्रह्मैव न तु अन्यत् किञ्चित् अन्यत् निर्दिष्टम्। अतः जिज्ञासायाः कर्मभूतं ब्रह्म। ननु शेषषष्ठी परिग्रहेऽपि ब्रह्मणि जिज्ञासा कर्मत्वं न विरुद्धयते, सामान्यसम्बन्धस्य विशेषनिष्ठत्वात्। शेषषष्ठी परिग्रहे ब्रह्मसम्बन्धिनी जिज्ञासा इत्यर्थः स्यात् तत्र च ब्रह्मणः जिज्ञासया सह को विशेषसम्बन्ध इति जिज्ञासायां कर्मत्वमेवोपस्थितं भविष्यति। अस्मिन् पक्षे ब्रह्मसम्बन्धिनोऽपि विचाराः सङ्ग्रहीताः भवन्ति इति चेन्न प्रत्यक्षं ब्रह्मणः कर्मत्वं परित्यज्य शेषषष्ठ्या सामान्यसम्बन्धद्वारेण परोक्षं कर्मत्वकल्पनं व्यर्थम्। अतः कर्मण्येव षष्ठी तत्र प्रधाने जिज्ञासा कर्मणि ब्रह्मणि गृहीते तत्सम्बन्धित्वात् तत्साधनान्यपि परिगृहीतानि भवन्ति। यथा-राजा असौ गच्छति इत्युक्ते सपरिकरस्य राज्ञो गमनम् उक्तं भवति, तद्वत् प्रत्यक्षमेव श्रुतिः ब्रह्मणः जिज्ञासा कर्मत्वं बोधयति तद्विजिज्ञासस्व तद्ब्रह्मेति,[३] तस्मात् ब्रह्मण इत्यत्र कर्मणि षष्ठी।

ज्ञातुमिच्छा जिज्ञासा। ज्ञाधातोः सन्[४] प्रत्यये जिज्ञासा शब्दः निष्पद्यते। ज्ञाधातोः ज्ञानमर्थः सन् प्रत्ययार्थः इच्छा, इच्छायाः कर्म ज्ञानम्, तादृशं ज्ञानं साक्षात्पर्य्यन्तं ग्राह्यम्। ज्ञानेन हि प्रमाणेन अवगन्तुमिष्टं ब्रह्म। ब्रह्मसाक्षात्कारो हि पुरुषार्थः। अशेषसंसारबीजायाः अविद्यायाः अनर्थभूतायाः तत्प्रपञ्चस्य च अनर्थभूतस्य निवर्हणात्[५] तस्मात् परमपुरुषार्थं ब्रह्मजिज्ञासितव्यम्।

इदानीं जिज्ञास्यं ब्रह्म किमिति उच्यते-तच्च ब्रह्म प्रसिद्धं वा अप्रसिद्धं वा? यदि प्रसिद्धं तर्हि न जिज्ञास्यम्। नहि स्फीतालोकवर्ति प्रसिद्धः घटः केनचित् जिज्ञास्यते। यदि च न प्रसिद्धं तर्हि अप्रसिद्धत्वादेव बन्ध्यापुत्रादिवत् अजिज्ञास्यं स्यात्। अत्रायं समाधिः-अस्ति तावत् ब्रह्म नित्यशुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्।[६] वृंहते विविधरूपेण विवर्तते इति ब्रह्म। ब्रह्मशब्दव्युत्पत्यैव

---

१. छान्दोग्योपनिषद् ८.१.६
२. तैत्तिरीयोपनिषद् २-१
३. तैत्तिरीयोपनिषद्-भृगुवल्ली १.१।
४. धातोः कर्मणः समानकर्तृकादिच्छायां वा -३.१.७।
५. ब्रह्मसूत्रभाष्यम् १.१.१।
६. शाङ्करभाष्यम् १.१.१।

नित्यशुद्धबुद्धमुक्तात्मत्वादि अर्थाः प्रतीयन्ते। वृहत्वाद्वा तच्च ब्रह्म सर्वात्मा, सर्वात्मत्वादेव तस्य अस्तित्वप्रतीतेः। सर्वो हि लोकः आत्मास्तित्वं प्रत्येति न नाहमस्मीति प्रत्येति। तस्मात् आत्मनः अस्तित्वादेव ब्रह्मणः अस्तित्वसिद्धिः आत्मा च ब्रह्म, अयमात्मा ब्रह्म इति श्रुतेः। अतः ब्रह्म प्रसिद्धमेव। अत्रेयं जिज्ञासा जायते यदि ब्रह्म लोके आत्मत्वेन प्रसिद्धमस्ति तर्हि प्रसिद्धत्वादेव न जिज्ञास्यं यद्धि संदिग्धं तद् जिज्ञास्यं भवति। उच्यते-तादृशस्य ब्रह्मणः प्रसिद्धत्वेऽपि तद्विशेषस्वरूपप्रतिपत्तौ विप्रतिपत्तयः दृश्यन्ते। तासु विप्रतिपत्तिषु सतीसु न विशेषतः निर्धारयितुं शक्यते कीदृशं ब्रह्म जिज्ञास्यमिति। अतः ब्रह्ममीमांसा तद्विशेषस्वरूपप्रतिपत्यर्थम् अवश्यं कार्या। विप्रतिपत्तयश्च-देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताजनाः, लोकायतिकाश्च प्रतिपन्नाः[१]। इन्द्रियाण्येव चेतनान्यात्मेत्यपरे, मन इत्यन्ये[२]। विज्ञानमात्रं क्षणिकमित्येके।[३] शून्यमित्यपरे। अस्ति देहादिव्यतिरिक्तः संसारी कर्त्ता, भोक्तेत्यपरे[४] अस्ति तद्व्यतिरिक्तः ईश्वरः सर्वज्ञः सर्वशक्तिरिति नैयायिकाः।[५] आत्मा स भोक्तुरिति वेदान्तिनः[६]। एवं वहबो विप्रतिपन्नाः युक्तिवाक्यतदाभासमाश्रयाः सन्तः विवदन्ते।

एतावता अधिकरणसारांशः प्रस्तुतः किन्तु साधनचतुष्टयसम्पत्यन्तर्गतस्य विवेकस्य विषये किञ्चित् स्पष्टीकरणमपेक्षते, एतदर्थोऽयमग्रिमः प्रयासः। अत्र नित्यानित्यवस्तुविवेकस्य वैराग्यं तस्य शमादिसम्पत् तस्या मोक्षेच्छा तस्या ब्रह्मजिज्ञासा फलत्वेनावगम्यते क्रमानुसारेण। तत्र नित्यानित्यवस्तुविवेकस्य नित्यवस्तुभूतमोक्षेच्छां विनैव अनित्ये वस्तुनि वैराग्यहेतुत्वं न सम्भवति। अनित्यपदार्थासक्तो हि यदि नित्यं स्वानुकूलं कञ्चित् पदार्थमवगम्य तमिच्छन् तदुपायं स्वकृति-साध्यमवगच्छति तदैवानित्याद् वस्तुनो विरक्तो भवति, नान्यथा।

उक्ताक्षेपसमाधानपरतया भामत्युक्तमाशङ्क्य निराकरणं करोति- सत्यासत्यविवेको वैराग्यहेतुः[७] अनृतासक्तो हि सत्यवस्तु प्राप्तिमननुसन्धायैव भोग्यस्यानृतत्वज्ञानमात्रात् ततो विरक्तो भवति इति न सम्भवति-अनृततया स्वाल्पपदार्थानवगच्छन्नपि कामुकः तेषां सुखसाधनतां अवगम्य तदुपयोगिमन्त्रौषधस्वाप्न सेवनादौ प्रवर्तमानो दृश्यते।अपि च वैराग्यं नाम तस्मिन्-तस्मिन् विषये तत्तद्विषयानुरागासमानकालीना तत्तद्विषयानुरागप्रागवस्थै- व।[८] तस्याश्च स्वतो साध्यत्वेऽपि परिपाल्यतया साध्यत्वम्। तत्र च इच्छा प्रतिबन्धकस्यैवोपयोगः। इच्छाप्रतिबन्धकं च तत्तद्वस्तुनो वलवद्दुःखसाधनताज्ञानमेव। अतः कथं नित्यानित्यवस्तुविवेकस्य वैराग्यहेतुत्वमिति चेत्-उच्यते-सांसारिकफलं सर्वमनित्यम् इति ज्ञानवतः सांसारिक भोगवियोगावश्यम्भावेन अवश्यमेतस्माच्छोकारण्यं दुःखं भविष्यति इति अनित्यवस्तु विवेको

---

१. ब्रह्मसूत्रशाङ्करभाष्यम् सू. सं. १.१.१.।
२. तदेव
३. तदेव
४. तदेव
५. तदेव
६. तदेव
७. भामती ब्र. सू. भाष्यम्।
८. तदेव

दुःखसाधनताज्ञानद्वारा वैराग्यहेतुः[१]। तत्र च दुःखसाधनताज्ञानमपि न सर्वदा रागप्रतिबन्धकम्। आस्तिककामुकस्य तस्मिन् सत्यपि निषिद्धे प्रवृत्तिर्दर्शनात्। किन्तु तस्मिन् दुःखे असहिष्णुताख्यद्वेषदशायाम्। तत्र यस्य स्थिरभोगसम्भावनायामेव अस्थिरभोगसम्पर्कजनितदुःखे तादृशो द्वेषः स तदा ततो विरक्तो भवति। यस्य तु तदाऽपि न स द्वेषः नासौ स्थिरभोगसम्भावनायामपि ततो विरज्यति। पुमिच्छाया नियन्तुमशक्यत्वात्। एवञ्च यस्य जन्मान्तरसुकृतवशात् दुःखमात्रे सदा तादृशो द्वेषः तस्य कृतं स्थिरभोगसम्भावनया वैराग्यं प्रति। तादृशपुरुषधौरेयाभिप्रायेण भाष्ये अयं क्रमः। अयं च विवेकः अधीतस्वाङ्गस्वाध्यायस्य 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति'[२] इत्येवमादिवाक्यं पश्यतः शङ्काकलङ्कित इव भवति। तथापि तद्वाक्यमन्यथाव्याख्येयमित्येतावन्मात्रम्, अनित्यता प्रतिपादकवाक्यार्थे ईश्वरानुग्रहलब्धदृढविश्वासबलात् स्वत एव सम्भावयति कश्चित्, कश्चित्तु तावन्मात्रोपयोगिनां न्यायं स्वत एवानुसन्धत्ते, कश्चित् पुनः प्रथमसूत्राध्ययनेन[३] सा शङ्का अपोदिता भविष्यतीत्याप्तोपदेशं लब्ध्वा तदध्ययनेन तां शङ्कां निवर्तयतीति न काचिदनुपपत्तिः।

एतेन आत्मा नित्यः सत्य इति वा विवेके शास्त्राध्ययनात् प्रागेव सञ्जाते तदध्ययनं व्यर्थं स्यादिति शङ्का निरस्ता। तादृशोप्यात्मा किम् एकः उत अनेकः, सगुणो वा निर्गुणो वा, ईश्वरभिन्नो वा अभिन्नो वा इत्येवमादि विचारणीयांशसद्भावात्। अत एव च संसारानित्यत्वे वा तदसत्यत्वे वा प्रागेव निर्णीते तदनित्यत्वप्रतिपादकानि तदसत्यत्वप्रतिपादकानि च उत्तराधिकरणानि व्यर्थानि स्युः। यदि तु तत्तदधिकरणनिवर्तनीयशङ्काविशेष निराकरणपूर्वकमुत्पन्नस्यैव विवेकस्य दृढतासम्पादकानि तानि, तर्हि तासु शङ्कासु अनिवर्तितासु अदृढो विवेकः कथं वैराग्यं सम्पादयेत्-इति शङ्का निरस्ता। ततश्च उक्तरूपाद्विवेकात् सांसारिकभोगाद्विरक्तस्य शमादिसम्पत्। अत्र आदिपदेन ''तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति[४] इत्यादि श्रुत्युक्तानि गृह्यन्ते। ततो मुमुक्षुत्वम्।

ननु मुमुक्षायामधिकारिविशेषणत्वेन गृहीतायां ततः प्राचीनान्यर्थाल्लभ्यन्त इति पृथगुपादानं व्यर्थमिति चेत्, न मुमुक्षा हि निर्दुःखसुखाभिलाष एव। स च सर्वसाधारणो नाधिकारिविशेषणमपितु उत्कटः इति वक्तव्यम्। तदुत्कटत्वञ्च अधिकारिणा निर्णेतव्यम्, अन्यथा सर्वकर्मसंयासपूर्वकं श्रवणारम्भे उत्कटमुमुक्षाया अभावे च फलपर्यवसायिश्रवणासम्भवात् व्यर्थः प्रयासः स्यात् इति शङ्काकुलस्य श्रवणे प्रवृत्यसम्भवात्। उत्कटमुमुक्षा च सैवोच्यते या विवेकादिपरम्परया सञ्जाता। अतः तदुत्कटत्वाभिव्यञ्जकतया विवेकाद्युपन्यासोऽपि आवश्यकः। न च शमादीनां प्राक्सिद्धत्वे शमदमाद्युपेतस्यात् इति विद्यानुष्ठानकाले तेषामनुष्ठेयत्वप्रतिपादनं व्यर्थं स्यात् इति वाच्यम्, प्राक् सिद्धानां तेषां विद्यास्वरूपोपयोगिताया परिपालनावश्यम्भावेन तत्परिपालनोपयोगियत्नविशेषापेक्षणात्। स च यत्नो दोषदर्शनप्रसंख्यानादिरूपः। एतावता अथ शब्देन विवेकाद्यानन्तर्यमेवोच्यते।

---

१. तदेव

२. तदेव

३. अथातो ब्रह्मजिज्ञासा।

४. वृहदारण्यकोपनिषद् ४.४.२३।

# पूर्वपक्षीयव्याप्तिविमर्शः

श्रीकृष्णमुरारीमणित्रिपाठी

"व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः[१]" तत् करणमनुमानमिति गङ्गेशोपाध्यायैः उक्तम् अनुमितौ व्याप्तिज्ञानं करणं भवति। अत एव गङ्गेशोपाध्यायैः उक्तम्–"अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः[२] तदनन्तरं नाव्यभिचरितत्त्वं व्याप्ति इत्यनेन पूर्वपक्षीयव्याप्तेः स्वरूपोद्घाटनस्य उपक्रमः कृतः। यतोहि अव्यभिचरितत्वं नाम व्यभिचारस्याभावः तस्य स्वरूपं पञ्चविधं विद्यते–

१. साध्याभाववदवृत्तित्वम्।[३]

२. साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्[४]

३. साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्।[५]

४. सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्।[६]

५. साध्यवदन्यावृत्तित्वम्।[७]

एतानि पूर्वपक्षीयव्याप्तेः लक्षणानि सन्ति। एतेषु लक्षणेषु दोषं प्रदर्श्य सिंहव्याघ्रयोः विदुषोः लक्षणे द्वे प्रदर्शिते–

१. साध्यासामानाधिकरण्यानधिकरणत्वम्।[८]

२. साध्यवैयधिकरण्यानधिकरणत्वम् इति।[९]

---

१. तत्त्वचिन्तामणि अनुमानुखण्ड पृ० सं० २ श्रीकामाख्यानार्थतर्कवागीश सम्पादितरहस्यसहिततत्त्वचिन्तामणि, भाग, २।

२. त० चि० व्याप्तिवाद रहस्यं पृ० सं० २७ भाग २।

३. तदेव पृ० सं० २७ भाग २।

४. तदेव पृ० सं० ३० भाग २।

५. तदेव पृ० सं० ३० भाग २।

६. तदेव पृ० सं० ३१ भाग २।

७. तदेव पृ० सं० ३१ भाग २।

८. तदेव पृ० सं० ६९ भाग २।

९. तदेव पृ० सं० ७५ भाग २।

तयोः द्वयोः लक्षणयोः तात्पर्यमिदं विद्यते, यत् साध्यानधिकरणानधिकरणत्वम्।''। दीधितिकारजये व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः स्वरूपाः चतुर्दशव्याप्तयः सन्ति।

''यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम्।'' इति प्रथमं लक्षणम्।[१]

द्वितीयलक्षणन्तु यत्समानाधिकरणानां साध्यतावच्छेदकाविच्छन्नव्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकानां यावतामभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वम्'' इति।[२] दीधितिकारेण लक्षणद्वयं प्रतिपाद्य चक्रवर्तीमते लक्षणत्रयं निरूपितं तानि लक्षणानि अधोलिखितानि सन्ति–

व्याप्यवृत्तिहेतुसमानाधिकरणसाध्याभावप्रतियोगिताया अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसमानाधिकरण्यम्।[३]

२. व्याप्यवृत्तिहेतुसमानाधिकरणाभावस्य प्रतियोगितायाः सामानाधिकरण्येन अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यम्।[४]

३. हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येन अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यम्।[५]

**प्रगल्भीयलक्षणत्रयमुच्यते–**

१. साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्या-भावत्वकत्वम्।[६] तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वम्।

२. यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदको धर्मो यद्रूपावच्छिन्नस्य व्यापकताया अवच्छेदकस्तद्रूपवत्वं तत्त्वम्[७]।

३. साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वम्।[८]

मिश्राणां नये त्रीणि लक्षणानि रघुनाथशिरोमणिना उच्यते– यावन्तस्तादृशाः साध्याभावाः प्रत्येकं यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानबन्धकत्वं नास्ति तत्त्वम्।[९]

---

१. जागदीशीव्यधिकरणदीधिति पृ० ११ दीपिकाटीकोपेता जागदीशीव्यधिकरणस्वामिश्रीरामप्रपन्नाचार्यः।
२. " " " पृ० ९१
३. " " " पृ० १०३
४. " " " पृ० १०८
५. " " " पृ० ११३
६. " " " पृ० १३०
७. जा० व्यधि० दी० पृ० सं० १३५ दीपिका टीका
८. " " " पृ० सं० १४३
९. " " " पृ० सं० १४८

२. यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदको धर्मो यद्रूपावच्छिन्नस्य व्यापकताया अवच्छेदकस्तद्रूपवत्त्वं तत्त्वम्।[१]

३. यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकधर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्।[२]

सार्वभौममिश्रनये तु व्याप्तेः त्रीणि व्यधिकरणलक्षणानि सन्ति।

१. वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः।[३]

२. वृत्तिमद्वृतयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः।[४]

३. साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधि-करणयावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिस्तद्वृतयस्तदवत्त्वं व्याप्तिः।[५] अन्यानि अपि व्याप्तेः पूर्वपक्षीयलक्षणानि सन्ति-

१. साध्यासमानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः।[६]

२. स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः।[७]

३. साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं व्याप्तिः।[८]

४. साधनसमानाधिकरणयावद्धर्मनिरूपितवैयधिकरण्यानधिकरणसामानाधिकरण्यं व्याप्तिः।[९]

५. अनौपाधिकसम्बन्धो व्याप्तिः।[१०]

६. कार्त्स्न्येन सम्बन्धो व्याप्तिः।[११]

७. यावत्साधनाश्रयाश्रितसाध्यसम्बन्धो व्याप्तिः।

---

१. " " " पृ० सं० १६७
२. " " " पृ० सं० १८०
३. " " " पृ० सं० १८२
४. " " " पृ० सं० २०८
५. " " " पृ० सं० २६७
६. तत्त्वचिन्तामणि अनुमानखण्ड पृ० सं० ६९ श्रीकामाख्यानाथतर्कवागीश सम्पादितरहस्यसहिततत्त्वचिन्तामणिः, भाग २ व्याप्तिवादः।
७. तदेव पृ ० सं० ७१
८. " " ७२
९. " " ७५
१०. " " ७७
११. " " ८२

८. साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यं व्याप्तिः।[१]

९. स्वाभाविकः सम्बन्धो व्याप्तिः।[२]

१०. अविनाभावो व्याप्तिः।[३]

११. सम्बन्धमात्रं व्याप्तिः।[४]

एतेषु लक्षणेषु दोषमुद्भाव्यचिन्तामणिकारेण सिद्धान्तलक्षणं कृतम्। तस्य स्वरूपं सिद्धान्तलक्षण-निरूपणकाले प्रदर्शयिष्यामि। तत्त्वचिन्तामणिकारेण अन्यान्यपि व्याप्तेः लक्षणानि उक्तानि।

१. प्रतियोग्यासमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः।[५]

१. प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम्।[६]

२. यत्समानाधिकरणान्योन्याभावप्रतियोगियद्वन्न भवति तेन समं तस्य सामानाधिकरण्यम्।[७]

३. यत्समानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं व्याप्तिः।[८]

४. अनौपाधिकत्वं व्याप्तिः तच्च यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत्तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यम्।[९] अनौपाधिकत्वस्य स्वरूपमन्यदपि विद्यते।

यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनोपाधिकत्वम्।[१०] अथवा

यावद् यत्समानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम्।[११]

---

१. " " ८३
२. " " ८४
३. " " ८५
४. " " ८५
५. तदेव पृ० सं. ८६
६. " " १००
७. तत्त्वचिन्तामणि अनुमानखण्ड पृ० सं० १३० श्रीकामाख्यानाथतर्कवागीशसम्पादितरहस्यसहिततत्त्वचिन्तामणिः, भाग २ व्याप्तिवादः।
८. तदेव पृ० सं० १३१
९. " " १३२
१०. " " १४९-५०
११. " " १५२
१२. " " १५३-५४

५. यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः।[१]

अनया रीत्या व्याप्तेः स्वरूपं प्रतिपादयितुं शक्यते। एतेषु व्याप्तिलक्षणेषु मध्ये पूर्वपक्षीय-पञ्चव्याप्तीनां विशेष-महत्त्वं विद्यते। तत्र साध्याभाववदवृत्तित्वं[२] पूर्वपक्षीयव्याप्तेः प्रथमं लक्षणम्। वृत्तं वृत्तिः भावनिष्ठाप्रत्ययो भवति। वृत्तस्य अभावः अवृत्तं साध्याववतः अवृत्तं यत्र अस्ति इति साध्याभाववतः अवृत्तं यत्र अस्ति इति साध्याभाववदवृत्ती तस्य भावः साध्याभाववद्वत्तित्वम् इति व्युत्पत्तिस्तु प्राचीननैयायिकाः कुर्वन्ति। अत्र साध्याभाववद् पदस्य अव्ययीभावः अवृत्तपदेन सह तत्पुरुषसमासो भवति।[३] अनया व्युत्पत्त्या साध्याभाववद् वृत्त्यभाववत्त्वम् इति लक्षणं फलितं भवति। तदपि न शोभनं यतोहि न कर्मधारयान् मत्वर्थीयो बहुब्रीहिश्चेत् तदर्थप्रतिपत्तिकरः इति अनुशासनस्य विरोधो भविष्यति। अत्र कर्मधारयपदं बहुब्रीहीतरसमासपरं यतोहि गुणप्रकाशरहस्ये गुणदीधितिरहस्ये च अगुणवत्त्वम् इत्यत्र गुणाः सन्ति येषु ते गुणवन्तः न गुणवन्तः इति अगुणवन्तः तेषां भावः अगुणवत्त्वम् इति व्युत्पत्तेः निरूपणं तत्र विद्यते। अनेन निरूपणेन प्रतिभाति यत्र उक्तानुशासने कर्मधारयपदं बहुब्रीहीतरसमासपरं विद्यते। पूर्वोक्तव्युत्पत्तेः अस्वीकारे अन्यदपि कारणं मथुरानाथैः उच्यते उक्तव्याख्यायां वृत्तस्य अभावः इत्यर्थे नयपदवृत्तपदयोः अव्ययीभावसमासं कृत्वा अवृत्तशब्दस्य निष्पत्तिर्भवति। अवृत्तपदेन सह साध्याभाववद् पदस्य पञ्चमी तत्पुरुषसमासो भवति। परन्तु उभय प्रक्रिया न सङ्गता। यतो हि अवृत्त अव्ययीभावसमासघटकवृत्तशब्दार्थेन सह साध्याभाववद् शब्दार्थस्य साध्याभाववन्निरुपितत्त्वस्य स्वरूपसम्बन्धेन अन्वयो भवति। तन्न सम्यक् अव्ययीभावोत्तरपदार्थेन सह समासनिविष्टपदार्थान्तरान्वयस्य अव्युत्पन्नत्वात्। वृत्तेः अभावो अवृत्तिः साध्याभाववतः अवृत्तिः यत्र इति बहुब्रीहिसमासोऽपि न कर्तुं शक्यते। वृत्तौ साध्याभाववतः अनन्वयापत्तेः।

वस्तुतस्तु इत्यनेन पूर्वोक्तव्याप्तेः सिद्धान्तव्याख्यां कुर्वन् आह मथुरानाथतर्कवागीश साध्याभाववतो न वृत्तिः यत्र इति त्रिपदव्यधिकरणबहुब्रीह्युतरं त्वं प्रत्ययः साध्याभाववतः इत्यत्र निरुपितत्वं षष्ठयर्थः तस्य अन्वयः वृत्तौ भवति। यद्यपि व्यधिकरणबहुब्रीहिः सर्वत्र न साधुः भवति। तथापि गत्यन्तराभावेन व्यधिकरणबहुब्रीह्येरेव साधुत्वं स्वीक्रियते।[४] तथा च साध्याभावाधिकरणनिरुपित- वृत्तित्वाभावो व्याप्तेः लक्षणम्। ''पर्वतो वह्निमान् धूमात्'' इत्यत्र साध्यो वह्नि साध्याभावः वह्न्याभावः तदधिकरणजलहदः तन्निरुपितवृत्तिता मीनादौ वृत्तित्वाभावस्य धूमे सत्त्वात् भवति लक्षणसमन्वयः। तथापि ''धूमवान् वह्नेः'' इत्यत्र धूमाभावाधिकरणजलह्रदनिरुपितवृत्तित्वाभावस्य अथवा धूमाभावाधिकरण-निरुपितवृत्तित्वजलत्वोभयत्वावच्छिन्नाभावस्य वह्नौ सत्त्वात् भवति अव्याप्तिः। अतः साध्याभावाधिकरण-निरुपितवृत्तित्वाभावपदेन वृत्तित्वसामान्याभावो ज्ञेयः।

---

१. तत्त्वचिन्तामणि अनुमानखण्ड पृ० सं० १३० श्रीकामाख्यानाथतर्कवागीशसम्पादितरहस्यसहिततत्त्वचिन्तामणिः, भाग २ व्याप्तिवादः।१ ५६

२. " " २७

३. माथुरीपञ्चलक्षणी पृ. सं. १४ व्याप्तिपञ्चकमाथुरी आचार्यबदरीनाथशुक्लसम्पादित हिन्दी टीका सहित।

४. माथुरीपञ्चलक्षणी पृ. सं. १८

# प्रत्यगात्मविषयकं दार्शनिकं चिन्तनम्

**प्रो. जयकान्तसिंहशर्मा**

तरति शोकमात्मविदि श्रुत्यात्मज्ञानस्यापवर्गसाधनत्वेनोक्तेरयमात्मपदार्थोऽवश्यं विचार्यतामेति। ''अत सातत्यगमने'' इति धातोरौणादिके मनिण्प्रत्यये निष्पन्न आत्मशब्दो नानार्थकस्तथाप्यत्र क्षेत्रज्ञ आत्मा पुरुष इत्यमरे गृहीतनामा क्षेत्रपुरुषपदबोध्य आत्मा विचार्यते यथामनीषम्। तदत्र विषये दार्शनिकैर्भूम्ना समालोचितम्, प्रसिद्धमतानामुपादानपूर्वकमभिमतपक्षः प्रस्तूयते–

**(क) चार्वाकमतम्–**

चार्वाकास्तु देह एवात्मेति वदन्ति। अत एव स देहावधिकः, न तु देहोत्पत्तेः पूर्वं देहनाशानन्तरं वा तस्य स्थितिः। देहात्मवादे प्रमाणं त्वहं जानामीति प्रत्ययः। ज्ञाता ह्यात्मा अहमिति चकास्ति। देहश्चाहङ्कारगोचरः, स्थूलोऽहं कृशोऽहमिति दर्शनात्। देहस्य हि स्थौल्यादियोगः। अतस्तत्समानाधिकरण-तयाहङ्कारः शरीरालम्बन इत्यवश्यमाश्रयणीयम्। यद्यपि भौतिकेषु काष्ठलोष्ठादिषु चैतन्यं नोपलभ्यते तथाऽपि भूतचतुष्टयसङ्घातात्मकदेहे चैतन्याविर्भावो नानुपन्नः। यथाक्रमं कफताम्बूलदलादिष्ववयवेषु प्रत्येकमविद्यमानोऽपि रागः संयोगादिविशेषादवयविन्याविर्भवति तद्वत्। परं त्वतेदरमणीयम्। इदं शरीरमिति शरीरविषयिणी मतिः पराग्वृत्तिः। अहं जानामीति प्रत्यग्वृत्तिरहमिति मतिः। सा चेदङ्कारगोचराद्भिन्नमेव स्वविषयमुपस्थापयति। तदुक्तम्–

**'न खल्वहमिदंकारावेकस्यैकत्र वस्तुनि इति।।''**

स्थूलोऽहमित्यादिषु लाक्षणिकः प्रयोगः। अत एव ममेदं गृहमिति ममेदं शरीरमिति भेदप्रतिभासः। किञ्च चैतन्यमपि देहे नोपपद्यते कार्यद्रव्यगतविशेषगुणानां कारणगुणपूर्वकत्वात्। ताम्बूलादावपि चर्वणजनितहुतवहसंयोगसम्पादितपाटलिमभिः परमाणुभिर्द्व्यणुकादिक्रमेण कारणपूर्वक एव रागोदयः। किञ्चानुमानेनापि देहस्यानात्मत्वं सिध्यति तथा चोक्तम्–

**उत्पत्तिमत्त्वात्पारार्थ्यात्सन्निवेशविशेषतः।**
**रूपादिमत्त्वाद्भूतत्वाद्देहो नाऽऽत्मा घटादिवत्।।**
**सच्छिद्रत्वाददेहित्वाद् देहत्वान्मृतदेहवत्।।**

किञ्च देहात्मवादे जन्मान्तराभावेनाकृताभ्यागमकृतविप्रवासदोषप्रसङ्गः। सन्ति हि देहान्तरानुभाव्य-स्वर्गस्वाराज्यादिसाधनविधायिन्यः श्रुतयः। किञ्च जातमात्रो हि जन्तुः स्तन्यादिवाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते। तदवस्थस्य च रागादयो जन्मान्तरीयसंस्कारोदयमन्तरेण न युज्यन्त इति बोध्यम्।

**( ख ) इन्द्रियात्मवादिमतम्–**

इन्द्रियात्मवादिनामयमभिप्रायः–ज्ञानं हीन्द्रियव्यापारफलम्। अतस्तदिन्द्रियसमवाय्येव भवितुमर्हति। ज्ञानाश्रयत्वमेव च चेतनत्वमिति। कि त्वेतदयुक्तम्, चक्षुषा पश्यामीत्यादिप्रतीतिविरोधात्। तत्र हि द्रष्ट्रादिश्चक्षुरादिभ्यो भिन्न एव प्रतीयते। किञ्चेन्द्रियाणां प्रत्यकं चेतनत्वं सम्भूय वा, नाऽऽद्यः इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानाभावप्रसङ्गात्। अस्ति च तत् 'यमहमद्राक्षं तमहं स्पृशामि'' इति। नान्त्यः, न हि पञ्चभिरिन्द्रियैः सम्भूयैकं वस्त्वनुभूयतेऽनुसन्धीयते वा। किञ्चैकेन्द्रियविगमे मरणप्रसङ्गः। तत्तदिन्द्रियापाये तदिन्द्रियार्थस्मरणानुपपत्तिश्च। तथा चान्धो रूपं न स्मरेत् बधिरः शब्दं न स्मरेत्। ज्ञानस्येन्द्रियव्यापारजन्यत्वेऽपि शस्त्रादिव्यापारजन्मनः पापादेरिवं परसमवायित्वं नानुपपन्नम्। अतश्चक्षुषा पश्यामि श्रोत्रेण शृणोमि, वाचा वदामीत्यादिप्रत्ययाद् बाह्येन्द्रियेभ्यो व्यावृत्त एवात्मेति निश्चितम्।

**( ग ) मनसोऽप्यनात्मत्वम्–**

मनसा जानामीति मनसो ज्ञानकरणत्वप्रतीतेः। किञ्च बाह्येन्द्रियेषु यथायथं स्वस्वविषयसम्बद्धेष्वपि यतो न युगपत्सर्वे विषयाः प्रतीयन्ते ततोऽवगच्छामः, अस्ति किञ्चिदपरमपि साधनं यत्सहायकविरहान्न सर्वे विषयाः युगपत्प्रकाशन्ते किन्तु कश्चिदेवैकः प्रतीयत इति मनसः करणत्वसिद्धिः। सुखानि संवेदनानि करणवन्ति क्रियात्वात् रूपादिज्ञानवत् इत्यनुमानमप्यत्र प्रमाणम् तदेवं ज्ञानकरणतयाऽवगतस्य मनसः कथमिव ज्ञाने कर्त्तृत्वम्। कर्त्तृत्वं हि स्वातन्त्र्यनियतम्। स्वातन्त्र्यञ्च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसम्पादनसामर्थ्यम्। करणत्वन्तु पारतन्त्र्यनियतम्। परातन्त्र्यञ्च पराधिष्ठानाधीन-व्यापारत्वम्।

**( घ ) प्राणानामप्यनात्मत्वम्–**

ननु प्राण एवाऽऽत्मा, प्राणान्वयिनि शरीरे सात्मकत्वप्रतीतेस्तदनन्वयिनि निरात्मकत्वप्रतीतेश्चेत्यत उच्यते मम प्राणा इति व्यतिरेकोक्तेः किञ्च प्राणो नाऽत्मा वायुत्वाद् बाह्यवायुवत्। देहधारण-योग्यतारूपविशेषमापन्नो वायुरेव प्राणः ''आपोमयः प्राणः ६/१/४'' इति श्रुतिस्त्वाप्यायनपरा। तेजोमयी वागितिवत्। सुषुप्तौ वृत्तिहीनेऽप्यात्मनि प्राणस्य वृत्तिमत्त्वदर्शनाच्च न तस्याऽऽत्मत्वम्। प्राणवृत्त्येव ह्यशितपीतद्रव्यस्य सुषुप्तावपि सप्तधातुभावेन परिणामः श्वासपरिश्वासौ च भवतः।

**(ङ) बौद्धमतम्–**

इत्थं बौद्धमतम्-संविदः स्वयम्प्रकाशत्वात्तस्या एवाऽऽत्मत्वत्त्वम्। किञ्च च यः संविदोऽन्यं संवेदितारमभ्युपगच्छति, अभ्युपगच्छत्येवासौ संविदम्। न ह्यसत्यामेव संविदि संवेत्तीत्युपपद्यते। एवञ्चेदुभयवदिसम्प्रतिपन्नतया सैव परं वेदित्री लाघवाद्भवतु किमन्येन कल्पितेन। तस्मादनाद्यविद्या-वशात्समारोपितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयम्प्रकाशा संविदेव परमार्थसती यैव चात्मेति। परन्त्वेतदयुक्तम्। स्वयम्प्रकशत्वं हि नाऽत्मत्वस्य व्याप्यम् किन्तु व्यापकम्। लाघवमप्यप्रयोजकम्। ''न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते[1] इति श्रुतौ संवित्तद्वतोः पृथग्दर्शनात्। तदुक्तं तत्त्वमुक्ताकलापे–

किञ्च संविद आत्मत्वे पूर्वेद्युर्दृष्टमपरेद्युरहमिदमदर्शमिति कथमिव प्रत्यभिजानीयात्। न च संवित्सन्तानाश्रयणेन प्रत्यभिज्ञोपपद्यत इति वाच्यम्। संविद्यतिरिक्तस्य स्थायिनोऽनुसन्धायिनः सन्तानस्याभ्युपगमे स्वसिद्धान्तत्यागः। अनभ्युपगमे प्रत्यभिज्ञानुपपत्तिस्तदवस्था। न ह्यन्येनानुभूतेऽन्यस्य प्रतिसन्धानसम्भवः। ''नित्या सा चस्य तद्वानपि निगममितौ गौरवं नाऽस्य भारः।''[2]

**(च) जैनमतम्–**

देहपरिमाण आत्मेति जैनपक्षः। एतदपि मतमयुक्तम्, बृहतः शरीरादाल्पीयसि शरीरे प्रविशतोऽपरिपूर्णत्वप्रसङ्गात् विकारत्वप्रयुक्तानित्यत्वादिदोषप्रसङ्गश्च। किञ्चैककालेऽनेकदेहान्परिगृह्णतां सौभरिप्रभृतीनां स्वस्वररूपमनेकधा कृत्वा तत्तद्देहपरिग्रहप्रसङ्गः। किञ्च परकायप्रवेश- द्वाराऽनेकशरीराणि परिगृह्णतां योगिनां स्वरूपस्य स्थूलशरीरं त्यक्त्वा ततः सूक्ष्मशरीरपरिग्रहसमये तस्य सर्वस्यावकाशा-भावाच्छैथिल्यं स्यात्। एतच्च नैकस्मिन्नसम्भवात्।[3] इत्यधिकरणे स्पष्टम्।

**(छ) यादवभास्कारयोर्मतम्–**

यादवमते भास्करमते च ब्रह्मणः सगुणत्वाङ्गीकारस्तुल्य एव। तथैव प्रपञ्चस्य सत्यत्वमपि। अत एव बन्धमोक्षव्यवस्था सिद्ध्यति। इयांस्तु विशेषः भास्करमते तत्त्वमसीति श्रुतेर्जीवब्रह्मणोरभेदः स्वाभाविकः। भेदस्त्वौपाधिको देवमनुष्यादिकृतः। अचिद्ब्रह्मणोऽस्तु भेदः स्वाभाविकः निर्मलम्[4] इत्यादिश्रुतेः। अभेदोऽपि च तयोः स्वाभाविक एव ''इदम् सर्वं यदयमात्मा[5] इत्यादिश्रुतेः। न चाचिद्ब्रह्मणोर्भेद औपाधिक इति वाच्यम् उपाधेः स्वान्तर्भावात् 'उपाधि ब्रह्म'' एतदुभयभेदस्याप्यौपाधिकत्वे नोपाध्यन्तरापेक्षायामनवस्थाप्रसङ्गात्। यादवमते तु अचिद्ब्रह्मणोरिव जीवब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ,

१. बृ. ४/३/३०
२. त० क० २/४)
३. ब्र० सू० २/२/३२
४. ब्र० वि० २१)
५. बृ० २/४/४५)

मुक्तावपि भेदश्रुतेस्तत्त्वमसीत्यैक्योपदेशाच्चेति। परन्त्वेतन्न युक्तम्। अत्र भास्करमत उपाधिब्रह्मव्यतिरिक्त-वस्त्वन्तरानभ्युपगमाद्ब्रह्मण्येवोपाधिसंसर्गादौपाधिकाः सर्वे दोषा ब्रह्मण्येव स्युः। ततश्च "अपहतपाप्मा"[१] इत्यादिश्रुतिविरोधः। यादवमतेऽपि जीवब्रह्मणोर्भेदवदभेदस्याप्यभ्युपगमाद् ब्रह्म स्वरूपेणैव सुरनरतिर्यक्-स्थावरादिभेदेनावस्थितमिति ब्रह्मणो जीवभावेन सर्वे जीवगता दोषा ब्रह्मण एव स्युः।

### (ज) शाङ्करमतम्–

अत्र अविद्याशबलं ब्रह्मैव जीवः। स च सर्वशरीरेष्वेकः। चैत्रानुभूते मैत्रस्याननुसन्धानं त्वविद्यावैचित्र्यात्। अतएव जीवैक्यवाद उपपद्यते। तथा "ज्ञानिनो मित्रामित्र कथा कुतः "यद्यन्योऽस्ति परः कोऽपि[२] एक एव हि भूतात्मा[३] 'घटाध्वंसे घटकाशो न भिन्नो नभसा यथा इत्यादि सङ्गच्छत इति एतदपि न सम्यक्, पृथगात्मानम्" इत्यादिषु श्रुतिषु जीवब्रह्मणोर्निरुपाधिकभेदप्रतिपादनात् आश्रयानुपपत्त्यादिसप्तविधानुपपत्तिग्रस्तत्वेनाविद्याया निरूपयितुमशक्यत्वाच्च सप्तविधानुपपत्तयस्तु श्रीभाष्यादौ द्रष्टव्य।: जीवैक्यवादस्तु साजात्यादेव 'पण्डिताः समदर्शिनः[४] इत्यादिस्मृतिभिर्जीवानां साम्यबोध्नात्। मित्रामित्रकथा कुतः 'इति तु न जीवैक्याभिप्रायम् किन्तु रागद्वेषाभावाभिप्रायम्। यद्यन्योऽस्ति[५] इत्यन्यशब्दोऽन्यादृश इत्यर्थकः। "एक एव हि भूतात्मा।"[६] इत्यैक्यमपि भूतसंसर्गशङ्कितवृद्धिह्रास-निषेधाभिप्रायम्। घटध्वंसे इत्यादिकं चौपाधिकवैषम्यनिवृत्तावत्यन्तसाम्यं व्यनक्ति। न हि घटध्वंसे घटावच्छिन्न आकाशांशोंऽशान्तरेणैकीभवति।

### (झ) अत्राद्वैतिन आहुः–

अहं जानामीत्यादौ ज्ञाधात्वर्थत्वेन यज्ज्ञानं भाति तत् स्वपरनिर्वाहकन्यायेन परप्रकाशकत्वा-त्स्वयंप्रकाशम्, तत्परेण प्रकाश्यं स्वयमेव प्रकाशशीलम्। तन्मतेऽनुभूतिः स्वयम्प्रकाशा नित्या, निर्विकारा, एका निर्विशेषाऽस्ति सैवानुभूतिरात्मा संविदात्मा, अजडत्वात् यदुक्तसाध्यन्न भवति तदुक्तसाधनमपि न भवति यथा घटः इत्यनुमानेन तत्सिद्धिः। अहमर्थो नात्मा सुषुप्तिमोक्षयोरननुवर्तमानत्वात् मोक्षे च तदनुवृत्तौ अज्ञत्वादिप्रसङ्गश्च। अतश्चैतन्यमात्रमात्मा। तत्र प्रत्यगर्थे आत्मनि चैतन्ये संसारावस्थायां रज्जौ सर्पभ्रमवत् निरुपाधिकोऽहं भ्रमो भवति। स्फटिके लौहित्यभ्रमवत् सोपाधिकः कर्त्तृत्वादिभ्रमः प्रवर्तते। किञ्च ज्ञातृत्वादिप्रकाशाभ्रान्तिः देहात्माभिमानवत् एव जायमानत्वात् स्थूलोऽहमित्यादिप्रतीतिवत् अतः सिद्धं ज्ञातृत्वेन भासमानोऽहमर्थो नात्मा किन्तु संविदेवात्मेति।

---

१. छा (८/७)
२. वि० पु० २/१३/८५)
३. ब्र० वि०१२)
४. गीता ५/१८)
५. वि० पु० २/३/८५)
६. ब्र० वि० १२

अत्रेत्थं विशिष्टाद्वैतवेदान्तिन आशेरते अहमर्थ एवात्मा स स्वस्मै स्वयंप्रकाशो ज्ञाता च स सुषुप्तिमुक्त्योरप्यन्वेति। तस्य धर्मभूतं नित्यं किञ्चिज्ज्ञानमस्ति, यत्संसारावस्थायां कर्मणा सङ्कोचविकासभाक् मुक्तौ प्रतिबन्धककर्मापगमेन काष्ठाप्राप्तविकासोपेतं सर्वमत्यन्तानुकूलतया विषयीकुर्वद्विभुः संपद्यते। इदं धर्मभूतज्ञानं विकासावस्थायां विषयान् प्रकाशयत् स्वयं स्वाश्रयायाहमर्थाय प्रकाशयति, न तु सङ्कोचावस्थायाम्। इदं विषयप्रकाशनवेलायामेव स्वाश्रयं प्रत्येव स्वयम्प्रकाशं न तु सर्वदा न वा सर्वान् प्रति। अन्यकालिकमाश्रयान्तरगतं च ज्ञानं स्मरणानुमित्यादिज्ञानगोचरः। ज्ञानान्तरापेक्षानियमं विना व्यवहारानुगुणमेवास्य स्वयंप्रकाशत्वम्। इदं परप्रकाश्यमिति न किन्तु कदाचित् परेणाऽपि ज्ञानेन प्रकाश्यते। इदं विषयप्रकाशकं स्वपरनिर्वाहकन्यायेन विषयप्रकाशनवेलायां स्वाश्रयाय स्वयं प्रकाशं विकाससङ्कोचाद्यवस्थाविशिष्टवेषेणोत्पत्तिविनाशशीलं प्रत्यात्मभिन्नं प्रत्यक्षत्वं परोक्षत्वं सुखदुःखाद्यनवधिक-विकारवत् सधर्मकमात्मनो धर्मभूतञ्च। इदं ज्ञानमनुभूत्यादिपदव्यपदेश्यं नात्मा भवितुमर्हति अन्यस्मै धर्मिणेऽहमर्थाय भासमानत्वात् तद्धर्मत्वाच्च। किन्तु ज्ञानस्यापि धर्मीभूतः स्वस्मै स्वयम्प्रकाशमानोऽहमर्थ एवात्मा। अयं सुषुप्तिमुक्त्योरप्यन्वेति। अयं देहेन्द्रियमनःप्राणधीभ्यः प्रतिशरीरं भिन्नोऽणुश्च संसारदशायां तिरोहितस्वरूपः स्वं प्रति आधारस्य नियन्तुः शेषिणो नित्याविर्भूतस्वरूपस्य निर्दोषस्य सर्वकल्याणगुणाकरस्य जगज्जन्मादिकारणस्य विभोः सर्वान्तर्यामिणः परमात्मन उपासनेन प्रीणयन् प्रीतेन तेन संसारान्मुक्तोऽर्चिरादि-मार्गेण दिव्यं धाम नीतस्तत्प्रसादादाविर्भूतस्वरूपो ज्ञानानन्दविषये तेन परमं साम्यं प्राप्तस्तदनुभवकैङ्कर्यधन्यो भवति ततोऽयं नावर्तत इति।

**शाङ्करमतानुयायिमतम्** अन्तःकरणावच्छिन्नानेकजीववादपक्षः शाङ्करमतानुयायिनः। तदुक्तं वेदान्तपरिभाषायाम् जीवो नामान्तःकरणावच्छिन्नं चैतन्यमिति। तस्य नानात्वमपि तत्रैव स्पष्टम्। अयमपि पक्षो न रमणीयः। कल्पान्तराऽनुभूतस्य कल्पनान्तराऽनुसन्धानानापत्तेः। अन्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे जीवत्वस्यान्तःकरणचैतन्य एतदुभयसमुदायवृत्तित्वेनान्तःकरणभेदे जीवभेदस्य दुर्वारत्वात्। अस्ति हि कल्पभेदे चेतोभेदः। सन्ति च कल्पादौ जातिस्मराः स्वयमागतविज्ञाना इति बोध्यम्। एतेन ज्ञानस्य क्षणिकत्वं क्षणिकसन्तानरूप आत्मेति बौद्धपक्षः, भूतचतुष्टयात्मकत्वाद्दहस्य देहावधिक आत्मेति चार्वाकपक्षः गजदेहे गजपरिमाणपिपीलिकादेहे तत्परिमाणोऽतो देहपरिमाण आत्मेति जैनपक्षः कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव न तु पुरुषस्येति सांख्यपक्षः, ब्रह्मांशो जीव इति यादवपक्षः सोपाधिकब्रह्मखण्डो जीव इति भास्करपक्षः, अविद्यापरिकल्पितः एव जीववादपक्षः अन्तःकरणावच्छिन्नानेकजीववाद पक्ष इत्येवमादयो विरुद्धपक्षा निरस्ताः।

## (ट) विशिष्टाद्वैतमतम्–

प्रत्यक्त्वेसति चेतनत्वे सति आत्मत्वे सति कर्तृत्वादित्वमात्मत्वमिति सामान्यलक्षणमात्मनः। सामान्यलक्षणलक्षितस्य विशेषलक्षणन्तु अणुत्वे सति स्वतःशेषत्वे सति आधेयत्वविधेयत्वपराधीन-कर्तृत्वपरतन्त्रादिकत्वे सति चेतनत्वम्।

प्रत्यक्त्वं नाम स्वयमेव स्वस्मै भासमानत्वम्। चेतनत्वं ज्ञानाश्रयत्वम्। आत्मत्वं शरीरप्रति-सम्बन्धित्वम्। कर्तृत्वं सङ्कल्पज्ञानाश्रयत्वम्। शेषत्वञ्च यथेष्टविनियोगार्हत्वम्। चेतनत्वमात्रोक्तावीश्वरेऽतिव्याप्तिः। शेषत्वमात्रोक्तावचित्पदार्थेष्वितिव्याप्तिरत उभयोपादानम्। जीवाश्चायं परमात्मना स्वेच्छानुसारेण विनियुज्यत एवेति लक्षणसमन्वयः। आधेयत्वमाश्रितत्वम्। विधेयत्वं नियम्यत्वम्। स च देहेन्द्रियमनःप्राणादिभ्यो विलक्षणः। एवं चाणुपरिमाणः उत्क्रान्त्यादिश्रवणात्प्रमाणानुसाराच्च। अणुत्वे युगपदनेकविषयानुभवः कथमिति न शङ्कनीयम्। धर्मज्ञानव्याप्त्योपपत्तेः। ननु जीवात्मा विभुः, शरीरव्यापिसुखाद्युपलब्धेः देशान्तरेऽपि तद्भोग्यवस्तूत्पत्तेश्च। तत्र हि जीवादृष्टं कारणमिति तस्य तत्र सन्निधानमपेक्ष्यते, कार्यकारणयोः सामानाधिकरण्यनियमात्। तच्चादृष्टमाश्रयमन्तरेण न सम्भवतीत्यगत्या जीवात्मनो विभुत्वमङ्गीकार्यमिति चेत्तत्रोच्यते ''उत्क्रान्तिगत्यागतीनाम् इति सूत्रे भाष्यम् उत्क्रान्तिस्तावच्छ्रुयते। तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्धनो वा अन्येभ्यो वा शरीरदेशेभ्यः। गतिरपि ये चैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति आगतिरपि ''तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे[1] इति। विभुत्वे ह्येते उत्क्रान्त्यादयो नोपपद्येरन्निति। तथा–

**वालाग्रशतमागस्य शतधा कल्पितस्य च।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते**
**स्वरूपमणुमात्रं स्याज्ज्ञानानन्दैकलक्षणम्।**
**त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः।**

इत्यादिश्रुतिस्मृतयोऽप्यत्र प्रमाणतयाऽनुसन्धेयाः। हृत्प्रदेशावच्छिन्नोपलम्भस्वारस्येन तादृशप्रमाणानुसारादित्यर्थः। उशीरादिवासितस्वादुशीतजलपानादौ युगपद् गन्धस्पर्शोपलम्भेन युगपदनेकेन्द्रियसन्निधानमात्मनोऽवश्यं वाच्यम्। तच्च विभुत्वमन्तरेण न सम्भवतीति शङ्काशयः। यद्यपि जीवात्मनो न सर्वशरीरव्याप्तिस्तथाऽपि तद्धर्मस्य ज्ञानस्य सर्वशरीरव्याप्त्या युगपदनेकविषयानुभवः सेत्स्यति। तथा च श्रुतिः प्रज्ञया घ्राणेन सर्वान् गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाणि पश्यति इत्यादि। सूत्रकारेणापि गुणाद्वा लोकवत् सूत्रमेवोक्तम्। स च प्रतिशरीरं भिन्नः।

अत एव कस्यचित्सुखित्वकालेऽन्यस्य दुःखित्वं दृश्यते। देहभेदस्तु न तन्नियामकः सौभरिशरीरे तददर्शनात्। न च देहभेदस्यानियोजकत्वे जन्मान्तरानुभूतस्य कुतो न स्मृतिरिति वाच्यम् संस्कारनाशेन तदुपपत्तेः। न च चैत्रेणानुभूते मैत्रस्यास्मरणमात्मैक्येऽपि संस्कारनाशादेवेति वाच्यम्; तथा सति चैत्रस्याप्यस्मरणप्रसङ्गात्। किञ्च सुखदुःखयोरेकाश्रयत्व उभयप्रतिसन्धानमेकस्यैव स्यात्। कश्चिद्बद्धः कश्चिन्मुक्तः कश्चिच्छिष्यः कश्चिदाचार्य इत्यादि व्यवस्था च न सिद्ध्येत देवमनुष्यतिर्यगादिभेदेन विषमसृष्टिश्च नोपपद्येत। कर्मभेदेन तु न विषमा सृष्टिः। जीवैक्यपक्षे हि कस्य कर्म कस्माद्

---
१. बृ० ४-४-६)

भिन्नमुच्यते इदं कर्मामुकस्यैति व्यवस्थाया असम्भवात्। एवमेवान्तःकरण भेदस्याप्यनियामकत्वं द्रष्टव्यम्। प्रयोगश्च-चैत्रात्मा मैत्रतादात्म्यरहितः तदनुभवजन्यस्मृत्यनाधारत्वात्कदाचिदपि तद्‌गतसुखादिप्रति सन्धानरहिताद्वा। ''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्''[१] इत्यादिश्रुतिरपि जीवानेकत्वे प्रमाणंम्। नन्वियं श्रुतिरौपाधिकभेदाभिधायिनी। अतएव ''भोक्त भोग्यम्''[२] इत्यादिभिर्जीवैकत्व-प्रतिपादिकाभिः श्रुतिभिरविरोध इति चेत् तत्र एकपरिमाणेष्वनेकेषु सुवर्णघटेष्वेको घट इति व्रीहिराशावेको व्रीहिरिति वज्ज्ञानैकाकारतयैकत्व व्यवहारः न तु स्वरूपैक्यम् प्रमाणविरोधात्।

एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते जनमित्यादौ यथा रामसुग्रीवयोरैक्यमित्यत्राप्येवमेव तयोः प्रकारस्यैक्यात्। इयदेव हि जीवाद्वैतम्, जीवाद्वैतशब्दस्य प्रकाराद्वैते तात्पर्य्यात्। जीवानामनेकत्वेऽपि तेषां प्रकारस्यैक्यात्।'' नानात्मनो व्यवस्थातः'' इति न्यायसूत्रेऽपि जीवानेकत्वमेव स्थापितम्। सांख्यैरप्युक्तम्-

**जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।।**[३]

तथा च जीवभेदनिषेधवचनानि प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमाननिबन्धन देवत्वादिभेद-निषेधपराणीत्युक्तं न्यायसिद्धाञ्जने। एवं जीवानां परस्परं भेदे सिद्धे जीवब्रह्मभेदोऽपि सिध्यति। ''नेह नाना[४] इत्यादिश्रुतयस्तु सर्वस्य ब्रह्मशरीरत्वेन ब्रह्मशरीरव्यतिरिक्त वस्त्वन्तरनिषेधार्थिकाः। एतदेव हि ब्रह्माद्वैतम् तस्य प्रकार्यद्वैते तात्पर्यात् ब्रह्मशरीरभूतानां प्रकाराणां जीवानामनेकत्वेऽपि तेषां सर्वेषामात्मभूतस्य प्रकारिणो ब्रह्मण ऐक्यात्। मुक्तावपि न जीवब्रह्मणोरैक्यम् ''सदा पश्यन्ति सूरयः''[५] इत्युक्तेः। किन्तु साम्यमात्रम् ''मम साधर्म्यमागताः''[६] इति भगवतैवोक्तत्वात्।

सर्व शरीरव्यापिसुखाद्युपलबिधरपि ज्ञानद्वारैव बोध्या। स चाऽनन्त्याय कल्पते[७] इत्यत्रोक्तमानन्त्यमपि धर्मभूतज्ञानद्वारैव बोध्यम्। ''नित्यः सर्वगतः स्थाणुः''[८] इत्यत्रोक्तं सर्वगतत्वमप्येवमेव, धर्मभूतज्ञानद्वारा जीवात्मनः सूक्ष्मानुवेशक्षमत्वात्-

---

१. काव्य ३)
२. श्वे १-१२)
३. सा० का० १८ इति)
४. बृ० ४/४/१९)
५. नृ० पू० ५-१०
६. गीता ४-२)
७. श्वे. ५-९
८. गी० २-२४

**देहेन्द्रियमनःप्राणाधीभ्योऽन्योऽनन्यसाधनः।**
**नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी।।**[१]

इत्युक्तं व्यापित्वमपि तथैव। यत्तु विष्णुपुराणे 'तस्यात्मपरदेहेषु सतोऽपि[२] इत्यत्र जीवात्मनोऽनेकदेहेषु सद्भावप्रतिपादनेन विभुत्वं सूच्यत इति तन्न जातिद्वारा तथा प्रतिपादनात्। एकस्य जीवात्मनोऽन्यस्मिन्देहेऽसत्त्वेऽपि तज्जातीयस्यान्यस्य सत्त्वात्। देशान्तरे भोग्यवस्तूत्पत्तिस्तु जीवात्मनोऽगुणत्वेऽपि न विरुद्धा, जीवात्मकृतकर्मनिमित्तेश्वरप्रीतिकोपात्मकबुद्धे दृष्टशब्दार्थत्वात् ईश्वरस्य च विभुत्वेन तद्बुद्धेः सर्वकार्यसामानाधिकरण्यमव्याहतमेव। न चात्मनोऽगुणुत्वे पृथिव्याद्यणुवत्तस्य प्रत्यक्षत्वं न स्यादिति वाच्यम्, विभुत्वेऽपि तवाऽऽकाशदिविभ्वन्तरवदप्रत्यक्षत्वप्रसङ्गात्। यथानुभवं स्वीकार्यमेव इति चेन्ममापि तुल्यम् पृथिव्यादिपरमाणूनामप्रत्यक्षत्वस्यास्माभि रनङ्गीकाराच्च। स च नित्यः पूर्वानुभूतार्थप्रतिसन्धानात् न जायते म्रियते[३] ज्ञाज्ञौ द्वावजावीशानीशौ''[४] इत्यादिश्रुतयोऽप्यत्र प्रमाणम्। किञ्च जीवानित्यत्वेऽकृताभ्यागमकृतविप्रणाशरूपदोषद्वयप्रसङ्गः।

नित्यश्चेज्जीव उत्पन्नो जीवो नष्टो जीव इति प्रतीतिः कथमिति चेन्न जीवस्य देहसम्बन्ध उत्पत्तिस्तद्वियोगो नाश इति प्रतिपादनाज्जीवस्वरूपं नित्यमेव प्रजापतिः प्रजा असृजत[५] सन्मूलाः सोम्येमाः सर्वाः प्रजाः[६] यतो वा इमानि भूतानि जायन्ते[७] जीवान्विससर्ज भूम्याम्[८] इत्यादिश्रुतयोऽप्येतदभिप्रायेणैव योज्याः। ननु नित्यत्वे जीवात्मनां सदेव सोम्यदमग्र आसीदेकमेवाद्वितीयम्[९] इति श्रुतिप्रतिपादितं सृष्टेः प्रागेकत्वावधारणं विरुध्यत इति चेन्न; नामरूपविभागाभाव एवैकत्वमिति तदाशयात्। एतेनाऽऽत्मानित्यत्ववा- दिनश्चत्वारोऽपि पक्षा निरस्ताः वेदितव्याः। तथाहि क्षणिक आत्मेति विज्ञानात्मवादिनः। आशरीरस्थायीति प्राणेन्द्रियात्मवादिनः। प्रलयान्त इति पौराणिकैकदेशिनः। मोक्षावधिक इत्यौपनिषदाभासाः। तत्र प्रथमे आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किञ्चिदुद्दिश्य प्रवर्तेत। प्रवृत्तिर्हि खलूत्तरकाले सुखं दुःखनिवृत्तिं वाऽभिसन्धायैव। साऽत्र कथं घटेत; फलकाले स्वाभावात्स्वकाले फलाभावात्। द्वितीये तु पारलौकिकं फलमभिसन्धाय यज्ञादौ प्रवृत्तिर्न स्यात्। सा च सार्वत्रिकी दृश्यते। तृतीये मोक्षमार्गोपदेशानर्थक्यम्। चतुर्थेऽप्यानर्थक्यमेव। तदुक्तं च–

---

१. आ० सि०)
२. वि० पु०२-१४-३१)
३. का. २-१८
४. श्वे. १-९
५. तै० स. ५/७/३)
६. छा. ६-८-४)
७. तै० ३-१२-१)
८. म ना १-४)
९. छा ६-२-१)

**अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति।**
**अपसर्पेदसौ मोक्षकथा प्रस्तावगन्धतः।।** इति

ननु विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति[१] इति जीवविनाशः श्रुयते। मैवम्; अस्याः श्रुतेर्लोकधीरूढानुवादमात्रत्वात्।

स्वतः सुखी–उपाधिवशात्संसारः। तदुक्तमात्मसिद्धौ– नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी' इति। अनादिकर्मरूपाविद्याकृताचित्संसर्गादित्यर्थः। उपाधिर्लिाङ्गदेहः प्रकृत्यात्मकोऽनादिरिति मान्याः। अयञ्च कर्ता भोक्ता शरीरी च भवति। तथा च श्रुतिः कर्ता विज्ञानात्मा पुरुषः[२] इति। अत एव यजेत स्वर्गकामः' ब्रह्मेत्युपासीत[३] इत्यादिशास्त्राणामर्थवत्त्वम्। बोद्धुरेव हि शासनं नाचेतनस्य प्रधानादेः। इदं च कर्त्ता शास्त्रार्थवत्वात्[४] इत्यधिकरणे स्पष्टम्। यत्तु–

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते।।**[५]

गुणानामेव कर्त्तृत्वं स्मर्यत इति। तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता। सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेत्याशयेन। एवमात्मनः कर्तृत्वे सिद्धे तन्मूलकं भोक्तृत्वमपि तस्यैव।

प्रकृत्यपेक्षया शरीरी प्रकृतिविकारभूतपाञ्चभौतिकशरीरापेक्षयेत्यर्थः। ईश्वरापेक्षया शरीरम् यस्याऽत्मा शरीरम्[६] इति श्रुतेः। तस्य प्रत्यक्षश्रुतिभ्याम् स्वयम्प्रकाशत्वञ्च सिद्धम्। प्रयोगश्च आत्मा स्वयम्प्रकाशः ज्ञानत्वाद्धर्मभूतज्ञानवदिति। ज्ञानाणुत्वामलत्वादय एतस्य स्वरूपनिरूपकधर्माः। स्वस्य चाऽस्य स्वयंप्रकाशत्वम्। परस्य तु तज्ज्ञानविषयतयैव प्रकाशते। स्वस्यापि प्रमाणान्तरोक्ताणुत्वशेषत्वनियम्यत्वनित्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव। अहमिति प्रत्यक्त्वैकत्व–विशिष्टतया तु स्वयम्प्रकाशता सर्वदा। योगदशायान्तु यथावस्थितापूर्वाकारविशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते। तदुक्तमात्मसिद्धौयोगाभ्यासमु वा स्पष्टं प्रत्यक्षे प्रकाश्यत इति अत्रायं पुरुषः स्वयं ज्योतिर्भवति[७] 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः[८] इत्यादिश्रुतिभिश्चाऽऽत्मनः स्वयम्प्रकाशत्वं सिद्ध्यति। यद्यपि हृद्यन्तर्ज्योतिः

---

१. बृ. २–४–१२
२. प्र. ४/९
३. छा. ३–१८–१
४. ब्र० सू० २/३/३३
५. गी. ३–२७
६. बृ० ३–७–३
७. वृ० ४–३–९
८. बृ. ४–३–९७

पुरुषः इत्यत्र ज्योतिशब्दो भाक्तस्तथाऽपि स्वयम्प्रकाशप्रदीपादिवल्लोकदृष्ट्यान्यनिरपेक्षत्वं स्वरसावगतं न बाध्यम्। स्वयम्प्रकाशत्वमनन्याधीनप्रकाशत्वम्। इदमेवासङ्गत्वम्।

ननु जीवस्य विभुत्वेनाङ्गीकारेऽदृष्टजनितदेशान्तरफलोपलब्धिः कथमिति चेन्न; जीवस्य सम्बन्धाभावेऽप्यदृष्टवशादेवोपपत्तेः। अदृष्टं नाम भगवत्प्रीत्यप्रीतिजनकजीवनकर्तृककर्म विशेषजन्यो ज्ञानविशेषणांशविशेषो भगवत्सङ्कल्प एव विभुस्वरूपं भगवन्तमाश्रितः। अतः फलोपलब्धिरिति न विरोधः। स जीवस्त्रिविधः–बद्धमुक्तनित्यभेदात्। तत्र बद्धा नामानिवृत्तसंसाराः। ते चतुर्दशभुवनात्मक–काण्डकटाहवर्त्तिनो ब्रह्मादिकीटपर्यन्ताश्चेतनाविशेषाः। एवंम्भूता बद्धा बीजाङ्कुरन्यायेन विषयप्रवाहतयाऽनादि–कालप्रवृत्ताविद्याकर्मवासनारुचि प्रकृतिसम्बन्धैश्चक्रवत्परिवर्तमानैर्गर्भजन्मबाल्ययौवनजाग्रत्स्वप्न सुषुप्तिमूर्च्छाजरामरणस्वर्गनरकगम नादिविचित्रावस्थावन्तोऽनन्तप्रकारातिदुःसहतापत्रयामितहता स्वतः प्राप्तभगवदनुभवविच्छिेदवन्तश्चेति। ते द्विविधाः– शास्त्रवश्यास्तदवश्याश्चेति। तयोर्मध्ये करणायत्तज्ञानानां वद्धानां शास्त्रवश्यतास्ति, तिर्यक्स्थावरादीनां तन्नास्ति। शास्त्रवश्या द्विविधा बुभुक्षवो मुमुक्षवश्चेति तत्र बुभुक्षवस्त्रैवर्णिकपुरुषार्थनिष्ठा पुरुषाः ते द्विविधाः– अर्थकामपरा धर्मपराश्चेति। केवलार्थकामपरा देहात्माभिमानवन्तः धर्मपराश्च अलौकिकश्रेयःसाधनं धर्मः चोदनालक्षणोऽर्थो धर्म इति शास्त्रलक्षितयज्ञदानतपस्तीर्थयात्रादिनिष्ठाः, ते च देहातिरिक्तामात्मनः परलोकोऽस्तीति ज्ञानवन्तः। धर्मपरा द्विविधा–देवान्तरपरा भगवत्पराश्चेति। देवान्तरपरा ब्रह्मरुद्रेन्द्राग्न्याद्याराधनपराः। भगवत्पराश्चार्तो जिज्ञासुंर्श्थार्थीत्युक्तरीत्याधिकारिणः। आर्तो भ्रष्टेश्वर्यार्थकामाः अर्थार्थी त्वपूवश्वर्यकामः। मुमुक्षवो द्विविधा कैवल्यपरा मोक्षपराश्चेति। कैवल्यं नाम ज्ञानयोगात्प्रकृतिवियुक्तस्वात्मानुभवरूपोऽनुभवः। मोक्षपराश्च द्विविधाः भक्ताः प्रपन्नाश्चेति। भक्ता पुनरधीतसाङ्गसशिस्कस्वेदाः पूर्वोत्तरमीमासांपरिचयाचिदचि–द्विलक्षणमनवधिकातिशयानन्दस्वरूपं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणात्मकं ब्रह्मावधार्य तत्प्राप्त्युपायभूतां साङ्गभक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामाः।

अकिञ्चनानन्यगतिकत्वधर्मविशिष्टो भगवन्तमाश्रितः प्रपन्नः। सोऽपि द्विविधः त्रैवर्गिकपरो मोक्षपरश्चेति। त्रैवर्गिकपरो नाम भगवत एव धर्मार्थकामाभिलाषी। मोक्षपरस्तु सत्सङ्गनित्यानित्यविवेके सति संसारे निर्वेदाद्वैराग्योत्पन्ने मोक्षेच्छायां जातायां तत्सिध्यर्थमाचार्यो वेदसम्पन्न इत्याद्याचार्यलक्षणलक्षितं गुरुं संश्रित्य तद्द्वारा पुरुषकारभूतां श्रियं प्रतिपद्य भक्त्याद्युपायान्तरेऽसक्तोऽत एवाकिञ्चनानन्यगतिः श्रीमद्रामचन्द्रमेवोपायत्वेन स्वीकरोति स प्रपन्नः, प्रपत्तिः सर्वाधिकारा।

स च प्रपन्नो द्विविधः एकान्ती परमैकान्ती चेति। यो मोक्षफलेन साकं फलान्तराण्यपि भगवत एवेच्छति स एकान्ती देवतान्तरशून्य इत्यर्थः। भक्तिज्ञानाभ्यामन्यत्फलं भगवतोऽपि यो नेच्छति स परमैकान्ती। स द्विविधः दृप्त आर्तश्चेतिभेदात्। अवश्यमनुभोक्तव्यमिति प्रारब्धकर्मानुभवन्ने–तद्देहावसानसमयमीक्षमाणो दृप्तः। जाज्वल्यमानाग्निमध्यस्थितनरस्येव संसारावस्थितेरतिदुः सहत्वात्प्रपत्त्युत्तरक्षणमोक्षकाम आर्तः। मुक्तो नामोपायपरिग्रहानन्तरं नित्यनिमेत्तिकभगवदाज्ञाकैकर्यरूपाणि–

स्वयं प्रयोजनतया कुर्वन्भगवद्भागवतापराधांश्च वर्जयन्देहावसानकाले ब्रह्मरन्ध्रन्निष्क्रम्य प्रकृतिसाकेत-सीमापरिच्छेदिकां विरजां तीर्त्वो सूक्ष्मशरीरं विहायामानवकरस्पर्शादप्राकृतदिव्यविग्रहयुक्तश्च ब्रह्मालङ्कारेणालङ्कृत इन्द्रप्रजापतिसंज्ञकनगरद्वारपालकाभ्यनुज्ञया श्रीसाकेताख्यं दिव्यनगरं प्रविश्य कल्याणगुणसागरं भगवन्तं दृष्टवा तत्पादारविन्दयुगले शिरसा प्रणम्य पादेन पर्यङ्कमारुह्य तेन स्वाङ्के स्थापितः कोऽसीति पृष्टो ब्रह्मप्रकारोऽस्मीत्युक्त्वा तेन कटाक्षितस्तदनुभवजनितहर्षप्रकर्षात्सर्वदेशसर्वकाल-सर्वावस्थोचितसर्वविधकैङ्कर्यरतिराविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभववान्य स मुक्त इत्युच्यते। मुक्तस्य ब्रह्मसाम्यापत्तिश्रुतिस्तु भोगसाम्यमाह। नित्या नाम कदाचिदपि भगवदनभिमतविरुद्धाचरणाभावेन ज्ञानसङ्कोचप्रसङ्गरहिता श्रीहनुमदादयः। इति जीवात्मस्वरूपं संक्षिप्य वर्णितम्।

# श्रीमद्भगवद्गीतायाः त्रयोदशाध्यायसन्दर्भे तत्त्वालोककारस्य दृष्टिः

स्वामी अनुभवानन्दः

तत्त्वमस्यहं ब्रह्मास्मीत्यादिमहावाक्यात् ज्ञायते यद् ब्रह्मजीवयोः तादात्म्यमर्थात् जीवो ब्रह्मैव नापरः अनयोरुभयार्थकत्वं प्रदर्शनात् लोके च पितृपुत्रयोः स्वामिसेवकयोः ब्राह्मणक्षत्रिययोः मूर्खपण्डितयोः धनीदरिद्रयोश्च भेददर्शनात् कथमभेदत्वं संगच्छते। एवं च क्षेत्रक्षेत्रज्ञयोः निरूपणावसरे क्षेत्रशब्देन प्रकृतिः क्षेत्रज्ञशब्देन च पुरुषः अनयोः कथमभेद इति जिज्ञासावान् तत्त्वालोककारो धर्मदत्तो ब्राह्मणः क्षत्रियो मूर्ख पण्डितो दरिद्रो धनी त्वमहमित्याद्यखिलजनानुभवसिद्धभेदानां जीवानां सर्वेषामेकेन परमात्मनाऽभेदे तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेव सर्वेषां जीवानां परस्परभेदापत्त्या भेदानुभवबाधापत्तिरित्यभेदः कथमुभयोः न कथञ्चिच्छ्रुतिश्चाभेदप्रतिपादिकोपचरितार्था भविष्यतीत्यर्थः।

ब्रह्मजीवयोः कथमभेदत्वमिति प्रश्नस्य समाधानावसरे दीपिकाकारैः यदुक्तमविद्याकल्पितवशात् अर्थात् मायाकल्पितत्वेन ब्रह्मजीवयोर्भेद इति परीक्ष्यते। अद्वितीयब्रह्मज्ञानस्यैव दोषत्वस्वीकाराद् अविद्याजन्यभ्रमरूपकल्पनावशाद् आत्मान्तःकरणादिधर्मत्वात्। संसारस्य जन्ममरणसुखदुःखप्रबन्धस्य च भिन्नत्वमापद्यते। औपाधिकत्वाद् उपाधिवशाद्व्यावहारिकसत्तायाः प्राबल्याच्च अनयोर्भेदो वस्तुतः पारमार्थिकदृष्ट्या नास्ति कश्चन भेदः। पारमार्थिकभेदाभावात् ब्रह्मजीवयोरैक्यं तादात्म्यं च स्थापयन्ति वेदान्तिनः। तत्र श्रुतिरेव प्रमाणम्–

> 'एको देवः सर्वभूतेषु गूढः, सर्वव्यापी सर्वभूतान्तरात्मा'[१]
> 'ममैवांशो जीवलोके जीवभूतः सनातनः'[२]
> एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति'[३]
> 'एको हंसो भूवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः[४]
> 'सर्वं खल्विदं ब्रह्म'[५]

---

१. श्वेता. उ.
२. गीता १५,७
३. श्वे. उ.
४. श्वे. उ.
५. छा. उ.

**सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्'[१]**
**'ईशवास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्[२]**
**'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्।।'[३]**

अभेदस्थापनावसरे स्वयं धर्मदत्तो निगदति–तथा च भिन्नतया कल्पितानामन्तःकरणादीनां भेदस्यैव तदुपाधिकेषु जीवेषु स्वानुभवगोचरत्ववत्संसारस्यापि तदुपाधिकस्यैव तेषु प्रतिभानाद्यावदज्ञानं व्यावहारिकजीवभेदस्थापित तेषां पारमार्थिकभेदविरहेण परस्पराभेदस्येष्टतया तदापादकत्वस्यैकब्रह्मा-त्मभेदेऽसंभवात्तदनुपपत्तिशंका न संभवतीति भावः। एकस्य जीवस्याविद्याकल्पितत्वान्तः करणाद्यौपाधिक-संसारित्वभेदः सिद्ध्यति। उपाध्युपधेयभावस्य भेदनियतत्वादन्यथोपाधीनां नानात्वमुपधेयस्य चैक्यमिति विरुद्धं भवेत्।

अतो भेदनीयं नियममभ्युपगत्य क्षेत्ररूपोपाधिक्षेत्रज्ञरूपापधेयभेदं प्रदर्शयति भगवान् अस्मिन् त्रयोदशाऽध्याये। जीवान्तःकरणयोः पारमार्थिकभेदाभावेऽपि ब्रह्मण एकत्वादन्तःकरणादेरपारमार्थिकत्वात् पारमार्थिको न इति।

पारमार्थिकप्रतियोगिभेदस्य पारमार्थिके असत्वाद् पारमार्थिकप्रतिपादनं न युक्तं तथापि व्यावहारिकपक्षं समासृत्यौपाधिकजीवनभेदग्रहानुकूलोपाध्युपधेयभेदस्य सापेक्षत्वादपारमार्थिजीवे ब्रह्मभेदो वर्तते इति न काचिदनुपपत्तिः तथाच–**'यद्यपि जीवान्तःकरणयोर्भेदो न पारमार्थिको ब्रह्मण एकस्यैव पारमार्थ-कत्वेनान्तःकरणादेरप्यपरमार्थतया तत्प्रतियोगिभेदस्य पारमार्थिकत्वासंभवादित्यपारमार्थिक-प्रतिपादनं भवतो नोचितं तथापि व्यावहारिकौपाधिकजीवभेदग्रहौपयिकोपाध्युपधेयभेदस्य तादृशस्यैवापेक्षिततत्वेनापारमार्थिकत्वेऽपि तस्य न कापि क्षतिरिति बोध्यम्।'[४]**

क्षेत्रमिति अभिधीयते इत्यत्राभिधीयत इति कर्मणि प्रयोगे क्षेत्रस्य जडत्वात् कर्मत्वं क्षेत्रज्ञशब्दे च द्वितीयां विना एव इति शब्दमाहरन् स्वप्रकाशत्वात् कर्मत्वाभावमिभप्रैति इति मधुसूदनाचार्यैः यदुक्तं तस्य व्याख्यानप्रसङ्गे तत्त्वालोककारः 'क्षेत्रशब्दे च' इत्यस्य स्वार्थं विभक्त्यर्थं स्फुटयति यथा क्षेत्रज्ञशब्दे इत्यत्र या सप्तमी सौपश्लेषिकी तस्मात् क्षेत्रज्ञशब्दोपश्लिष्टमितिशब्दं स्वीकृत्य एव बोध्यं तं प्राहुरित्यत्र तच्छब्दात्क्षेत्रगोचराहन्वाद्यभिमानकर्तृत्वरूपेणापहितस्य ज्ञानकर्मत्वयोग्यस्योपस्थापकत्वात् यद्यपि तत्र कर्मत्वबोधकद्वितीयाप्रयोगः समुचितः तथापि तत्समानाधिकरणश्रोत्रशब्दाद् द्वितीयां विना कर्मत्वबोधकस्याप्रासङ्गिकत्वात्। धात्वर्थज्ञानानुकूलव्यापारैकदेशज्ञानान्वय्यार्थकं क्षेत्रज्ञपदार्थे

---
१. मा. उ.
२. ईशा: उ.
३. मु. उ.
४. गु. तत्त्वालोक त्रयोदशोऽध्यायः पृ. सं. १४१

प्रतिक्षेत्रमेकस्मिन्निर्विकारचिद्रूपे ज्ञानकर्मत्वस्य मुख्यार्थस्य चित्तादात्म्यरूपस्याभावात् बोधाभिप्रायेण द्वितीया प्रयोगः। प्रमाणमपि शिशुपालवधकाव्यस्य श्लोकम् उद्धृत्य प्रदर्शयति-

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि: सः॥**[१]

एवं च **'क्रमादमुं नारद इत्यबोधी'** त्यस्य व्याख्याने इति शब्देन कर्मत्वाभिधानान्न द्वितीयेत्युक्तेरिति पदाभिधानेऽपि कर्मत्वप्रतिपत्तेरेवं तत्समानाधिकरणतत्पदार्थस्य द्वितीयया कर्मत्वे बोधिते क्षेत्रज्ञपदार्थेऽपि तत्प्रतिपत्तेरसङ्गतिरिति निरस्तम्। क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति गीतावाक्यस्य व्याख्यानं करोति तत्त्वालोककारः क्षेत्रक्षेत्रज्ञयो इत्यत्र क्षेत्रस्य जडत्वेन क्षेत्रज्ञस्य चित्त्वेन ज्ञानमर्थाद् अनयोर्भेदज्ञानवान् यो भवति स एव परमात्मनि अहमेव क्षेत्रपदार्थे चिदाकारस्य या प्रतीतिः सा अविद्यामूला एवं च क्षेत्रज्ञपदार्थे निर्गुणस्य निर्विकारस्य या प्रतीतिः साऽपि उपाधिवशात् ज्ञायते। यतः अविद्यामूलम् इदं जगत् भवति। **'ब्रह्म सत्यं जगन्मिथ्या'** अविद्यावच्छिन्नोपहितचैतन्यं जीवो भवति उपाध्युपरागेणोपाधिवत् नानात्वकल्पपनेति। वस्तुतः एकभूतस्य निर्विकारचित्तत्वस्य मुख्यकर्मत्वाभावेऽपि च अहन्त्वाभि-मानाश्रयौपाधिकलुषितवशात् क्षेत्रमपि क्षेत्रज्ञस्य यद् भानं न तद् वास्तविकम् एदतिरिक्तं क्षेत्रं न इत्याकारकभेदविशिष्टं निर्गुणं निर्विकारं क्षेत्रज्ञमिति तत्त्वस्य ज्ञानमवश्यं विहितं तत्त्वालोककारैः। तत्रेदमवधातव्यं बहुव्रीहिणार्थलाभेऽपि तादृशार्थज्ञानाय **'असुप्वत्' 'नीलोत्पलवत्सरः'** इत्यादीनां व्याख्यानावरे महाभाष्यकारैः नागेशैश्च कर्मधारयोत्तरं मतुप्प्रत्ययस्य विधानं कृतमनेन ज्ञायते अनुशासनं न सार्वत्रिकम्। अतिशायने नित्ययोगे इत्यत्र तादृशार्थलाभाय मतुप्प्रत्ययस्य कर्मधारयोत्तरं विधानं गुरुमधुसूदनवचनं सयुक्तिकम् अत एव ब्रह्मणि त्वनादित्वमभावरूपं ब्रह्मस्वरूपं संबन्धोऽपि ब्रह्मस्वरूपो नित्य एवेति स प्रयोजकमूलकं गुरुवचनं तथाहि-कर्तव्यमिति ज्ञानिनो वदन्ति-**'अनादिमत्'** इत्यस्य व्युत्पत्तिके इत्थं भणति तत्त्वालोककारः **'आदिपदान्मतुपं विधाय पश्चान्नञ्समासे कृते आदिमन्नास्तीत्यनादिमदिति'**[२] अर्थाद् आदेः अभावो अनादि इति नञादिपदस्य प्रथमं समासं विधाय मतुपि कृते सति कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात् बहुव्रीहिसमासेन तदर्थलाभसंभवे न कर्मधारयान् मत्वर्थीयो विधेयः।

**'न कर्मधारयान् मत्त्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः'** इति व्युत्पत्तिविरोधः। अत एव व्युत्पत्तिविरोधमूलकमनुशासनं स्वीकृत्य दीपिकाकारैः अनादीति। एतावतैव बहुव्रीहिणा अर्थलाभेऽपि अतिशायने नित्ययोगे वा मतुपः प्रयोगः इति। यदुक्तं तन्नं समिचिनमत एव आदिपदात् मतुपं विधाय पश्चात् नञ्समासः।

---

१. शिशुपालवधम्

२. गीता गू. तत्त्वालोक पृ सं. १४२

'यत्र यस्य प्रतियोगि व्यावहारिकं नहि तत्र तस्य व्यावहारिकत्वम्। ब्रह्मणि न प्रतियोगिव्यावहारिकमिति तादृशाभावस्य व्यावहारिकस्य सत्त्वं कार्ये प्रतियोग्यस्ति व्यावहारिकं न तत्राभावस्तादृशस्सादृश्येन संबन्धेनेति भवत्यदोषः। एतेनानादिपदात्कृतनञ्तत्पुरुषान्मतुपः प्रागनुक्तत्वेन तस्येदानीं कल्पान्तरत्वेन तत्सूचकवाकाराद्यभिधानमुचितमेकस्य तत्राकारस्यावृत्तिकरणं वानुचितमिति निरस्तम्। अथवा जीवाविद्याद्यनादय एव व्यावर्त्यास्तेषामनादित्वेन योगे सत्यपि न नित्ययोगस्तत्स्वरूप-वदनादित्वतद्योगयोरपि कल्पिततत्वेन ब्रह्मज्ञाननिवर्त्यत्वात्। ब्रह्मणि त्वनादित्वमभावरूपं ब्रह्मस्वरूपं संबन्धोऽपि ब्रह्म स्वरूपो नित्य एवेति प्रयोजनवती गुरूक्तिरुचितैवेति भावः।'[१]

वेदान्तिनां पृथिव्यादिवद् आकाशव्यक्तीनां जन्यानामनेकत्वाद् आकाशत्वं जातिरेवेति आकाशव्यतिरिक्तं दिङ्कालतत्त्वान्तरं तत्त्वं नास्ति पुनः ईश्वरादतिरिच्यते इति यत् मधुसूदनाचार्यैः भाषितं तस्य व्याख्यानावसरे गूढार्थतत्त्वालोककारैः इत्थम् उच्यतेआकाशस्य क्लृप्तत्वात् तत्तदुपाध्यवच्छेदेन प्राच्यादिव्यवहारस्य उपपादनसंभवाद् आकाशातिरिक्तं किमपि दिक्तत्त्वं नैव स्वीकार्यम् एवं च आकाशस्य श्रुतिसिद्धोत्पत्तिदर्शनात् तत्पूर्वकालव्यवहारविषयत्वस्याऽऽकाशेऽसंभवादीश्वरस्यैव तद्विषयस्योप-गन्तव्यतया ईश्वरातिरिक्तं कालतत्त्वं नाभ्युपेतव्यम्। यदि दिक्कालयोः आकाशातिरिक्तत्वसत् साध्यते तज्जिज्ञासायामुच्यते उपाधिविशेषप्रवृत्तिनिमित्तात् अनयोः तत्त्वालोककारःक्लृप्ते विनिगमनाविरहात्कमप्य-न्यत्सिध्यतीतिन्यायेन दिक्कालयोरतिरिक्तयोरेवाभ्युपेयत्वात् तथाहि दिग्व्यवहारविषयत्वस्याकाशे परमेश्वरे मायायां वा विनिगमनाविरहेण कल्पने लाघवादतिरिक्तदिशस्तद् व्यवहारविषयतया सिद्धिरेवं कालेऽपि परापरत्वासमवायिकारणसंयोगकारणत्वेऽपि विनिगमनाविरहेणानेककारणतायां गौरवेण लाघवादेक-कारणत्वस्योपेयतया तादृशसंयोगाश्रयतयापि दिगादिसिद्धिरिति।

**'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि'**[२] इत्यादि श्लोकस्य व्याख्यानावसरे प्रकृतिर्मायाख्या त्रिगुणात्मिका पारमेश्वरी शक्तिः क्षेत्रलक्षणा या सा प्रकृतेः अनादित्वात् सर्वजगत्कारणत्वं सिद्ध्येत् इति सांख्या वदन्ति।

जगतः कारणत्वात् प्रकृतेः अनादित्वं प्रकृतेः कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात्। उक्तं च मधुसूदनाचार्यैः **'तस्या अपि कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात्'**[३] अस्याः पङ्क्तेः व्याख्यानावसरे बच्चा झा इत्थं निगदति'-अनादिरेवैकस्य कारणत्वे तस्य पूर्वपूर्वकाले सत्तया कार्यत्वेनाभिमतस्यापि पूर्वपूर्वसत्त्वापत्त्यानादित्वम् अकार्यत्वं च भवेत्। आगन्तुकस्य कारणकोटिप्रवेशे सति तस्याप्यन्यत्कारणं वक्तव्यम्। यस्य कारणत्वं कलप्यते तस्याऽपि कारणान्तरं वक्तव्यमिति चेद् अनवस्था। **'अप्रामाणिक-**

---

१. गीता गू. तत्त्वालोक पृ सं. १४२

२. ......................

३. गीता गू. दी

**कल्पनासमाप्त्यभावः अनवस्था।।'**[१] तत्रेदमवगन्तव्यम् अनादित्वस्य कारणत्वकल्पे या अनवस्था प्रदर्शिता सा अनवस्था न दोषाधायिका यतः बीजाङ्कुरप्रवाहवदनादित्वाज्जीवाश्रिताविद्योपगन्तृणां भामतिकाराणां वाचस्पतिमिश्राणां जीवाविद्ययोरन्योन्याश्रयस्य वारणं बीजाङ्कुरप्रवाहवदनादिप्रवाहत्वेनैव संभवतीति तेषां नये अविद्याया अनादित्वमपि प्रवाहानादित्वम्। यदि च उक्तानवस्था दोषाधायिका भवेत् तर्हि अनादेरेकस्याः मायाया अनादेः क्षेत्रस्य च कारणत्वेऽपि अनादित्वेन कार्यत्वेनाभिमतस्य कार्यस्य पूर्वपूर्वमुत्पत्त्यापत्त्याऽनादित्वमकार्यत्वं च स्यादिति तद्वारणाय यदि आगन्तुकानां दृष्टादेः कारणत्वस्वीकारे आगन्तुकसिद्ध्यर्थं तं प्रत्यागन्तुकस्य तादृशमागन्तुकं प्रति पुनः आगन्तुकस्य कारणत्वकल्पनया अनवस्थापत्तिः, अत एव मायावशाद् ब्रह्म जगन्निर्माणं करोति। अनादिरूपायाः मायायाः एककारणत्वं लाघवात् कल्पनीयमिति वाचस्पतिमिश्राणामाशयं स्फुटति तत्त्वालोकग्रन्थावलोकनात्। अविद्यायाः कल्पितत्वेऽपि यथाऽनादित्वनिर्वाहस्तथोक्तदृष्टिसृष्टिवादेः अविद्यायाः किमुपादानमित्यस्यापि नावकाशः।

आकाशस्य उपाधिविशिष्टत्वेन तत्त्वस्येश्वराङ्गिकर्तृत्वेन कालस्य च तत्त्वान्तरं नास्तीति ये वदन्ति, तत्र के ते उपाधयः कश्च तैः सह सम्बन्धः इत्यत्र सन्ति वेदान्तिनां मतभेदाः, तथाहि **'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'**[२] मिति श्रुतौ श्रुतानिर्वचनीयविचित्रानेकशक्तिमत्तया मायापदप्रतिपाद्या, अत एव सांख्याभिमतप्रकृतेर्विलक्षणं जगत्। प्रकृतिर्महेश्वर-पदलक्ष्यशुद्धचेतनाश्रितैकाप्रतिबिम्बन-कृत्स्नोपाधिस्तत्तद्विक्षेपावरणरूपानन्तशक्तिमत्त्वेन कल्पितानन्तप्रदेशभेदवती प्रतिबिम्बनोपाधिनां गतापरिच्छिन्ना जीवोपाधिस्तेषु तेषु प्रदेशेष्वविद्याभिधानेषु प्रतिबिम्बास्ते ते जीवा उपाधेरनादित्वात्परिच्छिन्नत्वाच्चानादयः परिच्छिन्नाश्च सर्वत्र प्रसिद्धोपदेशादित्यधिकरणभाष्ये द्युभ्वाद्यधिकरणभाष्ये च जीवस्य शरीर एव प्रतिलम्भस्याविभुत्वस्य च प्रतिपादनादित्येकं मतम्। **'जीवेशावाभासेन करोति माया चाविद्य च स्वयमेव भवती'**[३]ति श्रुतौ त्रिगुणायाः मूलप्रकृतेर्द्वौ भेदावुक्तौ तत्र शुद्धसत्त्वप्रधाना माया परमेश्वरोपाधिः प्रतिबिम्बने मलिनसत्त्वप्रधानाऽविद्या जीवप्रतिबिम्बनोपाधिरूपादेर्विशुद्धमलिनत्वाभ्यामीश्वरजीवयोः सर्वज्ञत्वाल्पज्ञत्व इति कस्यचिन्मतम्। विक्षेपशक्तिप्रधाना मायेश्वरोपाधिरत एव स सर्वजगत्कत्रावरण-शक्त्यप्राधान्यात्सर्वज्ञः। आवरणशक्तिप्रधानाऽविद्या जीवोपाधिरत एव जीवोऽज्ञः।

विक्षेपशक्त्यप्राधान्यात्कस्यचित्प्रातिभासिकादेरेव स्रष्टेत्यपि कस्यचिन्मतम्। मतेष्वेतेषु प्रकृतेरेकस्या एव शक्त्यपरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यां शुद्धमलिनसत्त्वप्रधानाभ्यां विक्षेपावरणशक्तिप्राधान्याभ्यां वा काल्पनिको भेदो व्यावहारिकोऽपि तथैव श्रुत्या स्वयमेव भवतीत्यभेदप्रतिपादनात्। न चोपाधिभेदं विनैकस्य प्रतिबिम्बभेदसंभव इत्यतः **'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर'** इति श्रुत्यनुसारादविद्यैक

---

१. न्याय मु. कि. टीका (जातिबाधकप्रकरणम्)

२. गीता गू. तत्त्वालोकः पृ सं. १४३

३. गीता गू. तत्त्वालोकः पृ सं. १४३

कारणमीश्वरोपाधिरन्तःकरणानि कार्याणि जीवोपाधिरूपाण्यविद्यान्तःकरणयोरुपाध्योः प्रतिबिम्बरूपावीश्वरजीवौ श्रुतावस्मिन्तयोरुपाधित्वस्य कण्ठत एवोक्ते **'जीवेशावभासेन करोती'**[१] त्यत्र जीवेशयोः प्रतिबिम्बत्वमात्रप्रतीतेर्मायाविद्ययोरुपाधित्वाप्रतीतेरविद्याशब्देनान्तः करणस्यैवोक्तत्वात्तस्यैवाज्ञत्वप्रयोजक-त्वात्तत्कार्यस्य तस्य तदभेदस्यापि संभवात्।

न चान्तः करणस्य कार्यतया सादित्वाज्जीवेऽपि सादिरेव स्यात्तया चाकृताभ्यामगप्रसङ्ग वासनाद्यभावेन स्तनपानादिप्रवृत्त्यभावप्रसङ्गश्चेति वाच्यम्। संसारस्यानादितया एव स्वीकारेणादृष्टानां जातविपाकानां भोगेन क्षये स्थितानां विपाककालाप्राप्तावुपस्थिते प्रलयेऽन्तः करणान्यदृष्टवासनासहितानि स्थूलरूपतामपहाय सूक्ष्मरूपेण संस्कारापराभिधानेन स्वकारणे प्रलीयनिर्मृष्टचित्रकल्पान्यवतिष्ठन्ते। पुनः प्रलयावधौ पूर्णे **'विपाकाभिमुखेष्वदृष्टेषु'**[२] स्थूलरूपतां प्रतिपद्यन्ते एवं तत्पूर्वसर्गे चेति नोक्तदोषस्य ह्यस्त्यवकाशः। सूक्ष्मरूपतापत्तिरेव हि विनाशो न बाधकात्तत्त्वज्ञानात्प्राङ्निरन्वयो विनाशः स्थूलरूपतापत्तिरेव तस्य कार्यत्वं तादृशावस्थमेव च तत्परिमाणतया व्यपदिश्यते। सूक्ष्मावस्थागतान्यप्यदृष्टान्येव विपाककाले प्राप्ते स्वफलोपभोगसाधनस्यान्तःकरणादेः स्थूलरूपतापत्तौ तत्कारणस्य परिणामिनो विवर्तमानस्य च निमित्तस्य चेश्वरस्य सहकारितामापद्यन्ते। अन्तः करणोपादानानां साक्षादज्ञानं वा मिलितापञ्चीकृतभूत-सात्त्विकांशो वेत्यन्त एतदिति संक्षेपशारीरकमतम्। एषु च प्रतिबिम्बपक्षेषु यथा **'स्वयञ्ज्योतिरात्मा-विवस्वानपो भिन्ना बहुधैकोऽनुगच्छत्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे'**[३] ति। **'अत एव चोपमा सूर्यकादिवदि'**ति सूत्रमपि प्रमाणम्। चित्रदीपे च **प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती**'ति श्रुतौ देहादिसंघातरूपेण परिणतेभ्यो भूतेभ्यो उपाधिरूपेभ्यः समुत्थानं तत्साम्येन तदुत्पत्त्योत्पादोऽनुविनाशस्तन्नाशेन नाशः प्रज्ञानघनरूपप्रतिपादितः।

---

१. गीता गू. तत्त्वालोक पृ सं. १४४
२. गीता गू. तत्त्वालोक पृ सं. १४३
३. गीता गू. तत्त्वालोक पृ सं. १४४

# वेदान्तदर्शने प्रत्यक्षप्रमाणम्

**डॉ० जवाहरलालः**

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति प्रमाणशास्त्रस्याभिमतम्। यथां– **"इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्"**[१], सूत्रेऽस्मिन् चक्षुः सन्निकृष्टेषु मरूमरीचिकाषु जायमानम् उदकमिति भ्रमात्मकस्य ज्ञानस्य प्रत्यक्षत्ववारणाय अव्यभिचारिपदं प्रदत्तम्। अतस्मिँस्तदिति ज्ञानं व्यभिचारि। अथ सूत्रस्थाव्यपदेश्यपदेन निर्विकल्पकं प्रत्यक्षं, व्यवसायात्मकमित्यनेन सविकल्पकं प्रत्यक्षं चोच्यत इति। पं. केशवमिश्रेणापि–**साक्षात्कारिणी च प्रमा सैवोच्यते इन्द्रियजन्या"**[२]। प्रभाकरमते–**''साक्षात्प्रतीतिः प्रत्यक्षम्"**[३] इति प्रत्यक्षलक्षणम्। अत्र लक्षणे प्रयुक्तस्य साक्षात् पदस्य नन्दीश्वरः प्रभाकरविजये त्रिधा व्याख्याता।[४] तत्रादौ–

१. साक्षात्प्रतीतिः स्वरूपप्रतीतिः। स्वस्यैव रूपं स्वरूपम्। असाधारणरूपमित्यर्थः।

२. यद्वा अव्यहितप्रतीतिः साक्षात्प्रतीतिः। अव्यवहितत्त्वं नाम स्वविषयानन्तर्गतज्ञानान्तराव्यवहित-त्वमभिप्रेतम्।

३. साक्षात्त्वं स्वकालाकलितवस्तुसत्त्वावबोधकत्वं, यत्कालीनं ज्ञानं तत्कालसंबंधिवस्तु-विषयमित्यर्थः।

अत्र चोदना प्रमाणमिति नियमप्रतिष्ठापनार्थं लौकिकवाक्याप्रामाण्यं, अख्यातिवादम् उपस्थापयन्ति प्राभाकराः इति अयं विशेषः। तन्त्ररहस्यकारस्तु **"साक्षात्प्रतीतिः प्रत्यक्षम्। इत्यत्र साक्षात्त्वं चापरोक्ष्यं विशदावभास इति। तच्च सर्वसंवित्तीनाम् आत्मस्वात्मांशयोः"**।[५] तत्र मीमांसादर्शने– इन्द्रियाणां विषयैः सह संयोगे सति पुरुषस्य या बुद्धिः जायते तत् प्रत्यक्षं तथा च सूत्रम्–**''सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भत्वात्।''**[६] लक्षणमिदं भ्रमात्मके ज्ञानेऽपि वर्तते एव। अतः शास्त्रदीपिकायां मिश्रपादेन उद्घाटितं–**तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्"**।[७] एवं मानमेयोदयकारेणापि **"इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षम्"**[८] तत्र

---

१. न्यायसूत्रम् १-१-४
२. तर्कभाषा –प्र. प.।
३. प्रकरणपञ्चिका १४६
४. प्रभाकरविजयम् २६
५. तन्त्ररहस्यम् ९
६. मीमांसादर्शनम् १/१/४
७. शास्त्रदीपिका। ४८
८. मानमेयोदयः ८

गागाभट्टेन भाट्टचिन्तामणौ त्रीणि प्रत्यक्षलक्षणानि उक्तानि– **"इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षमिति"** सूत्रकारः। **"ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्"। जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा।**[१]

वेदान्तिनां मते तु "इन्द्रियार्थसन्निकर्षं जन्यं ज्ञानं प्रत्यक्षम्" इति नेदं प्रत्यक्षलक्षणं भवितुमर्हति। मनोरुपेन्द्रियजन्यत्वेन स्मृत्यादीनां प्रत्यक्षत्वप्रसङ्गात्। मनसः अनिन्द्रयत्वे सुखदुःखादिमानसप्रत्यक्षे लक्षणस्याव्याप्तिः। सुखादीनां मनोजन्यत्वात्। ईश्वरस्यापि इन्द्रियाभावाद् ईश्वरप्रत्यक्षे अव्याप्तमेव लक्षणम्।

अत्र ध्यातव्यं यद् वेदान्तिष्वपि प्रत्यक्षप्रमा, प्रमाणस्वरूपविषये प्रस्थानभेदेन भेदः दरीदृश्यते। तत्रैकं मतं "मानाधीना मेयसिद्धिः" इतिन्यायमनुसृत्य प्रत्यक्षलक्षणं प्रतिपादयति। प्रत्यक्षप्रमाणेन प्रत्यक्षज्ञानं तद्द्वारा विषयप्रत्यक्षम्। तद्यथा–प्रत्यक्षप्रमाणजन्यं ज्ञानं प्रत्यक्षं प्रमा[२] एतादृश–प्रत्यक्षज्ञानस्य विषयत्वं च विषयगतप्रत्यक्षत्वम्। अपरन्तु एतद् वैपरीत्येन विषयमाश्रित्य प्रत्यक्षं प्रतिपादयति। विषयस्य प्रत्यक्षत्वमादौ प्रतिपाद्य प्रत्यक्षज्ञानं, तद्वारा च प्रत्यक्षप्रमाणं निर्धारयति। तद्यथा–साक्षादपरोक्षविषयस्यैव विषयगतप्रत्यक्षत्वं प्रत्यक्षविषयमवलम्ब्य यद् ज्ञानमुदेति तत् प्रत्यक्षज्ञानम्। तस्य प्रत्यक्षज्ञानस्य साक्षात् साधनं च प्रत्यक्षप्रमाणमिति।

विषयमाश्रित्य ज्ञानमुदेति इत्यस्मिन् पक्षे–**''विषयजन्यं ज्ञानं प्रत्यक्षम्''**[३] इति लक्षणं क्रियते चेन्मनोविशेष्यकानुमितौ प्रत्यक्षत्वप्रसङ्गः। अथ च मनोविशेष्यकानुमितेः मनोरूपविषयजन्यत्वेन तत्र लक्षणस्यातिव्याप्तिः। सुखादिप्रत्यक्षेऽपि पुनः लक्षणस्याव्याप्तिः स्यादेव। वेदान्तिनां मते सुखं सुखाद्याकारावृत्तिश्च युगपदुदेति, सुखाद्याकारावृत्तिः, पुनः न सुखरूपविषयजन्या। युगपदुत्पन्नस्य जन्यजनकभावाभावाद्। पुनः तत्रोक्तलक्षणे ज्ञानं जन्यं, विषयः जनकः। जनकतावच्छेदकं, विषयत्वमित्यत्र विषयत्वरूपधर्मस्य अनुमेयेषु विषयेषु वह्न्यादिष्वपि विद्यमानता त्वस्त्येव। तत्र पुनः प्रत्यक्षज्ञानविषयत्वम् अवच्छेदकं स्वीक्रियते चेत् तर्हि प्रत्यक्षज्ञानं प्रति प्रत्यक्षविषयत्वं, प्रत्यक्षविषयत्वं प्रति प्रत्यक्षज्ञानं कारणम्। अतः अन्योन्याश्रयप्रसक्तिः। अतः विषयाश्रितं प्रत्यक्षलक्षणं न युक्तियुक्तम्।

ज्ञानमाश्रित्य प्रत्यक्षलक्षणं क्रियते चेत्–यथा "यज्ज्ञानं ज्ञानान्तरेण न जन्यं तत् प्रत्यक्षम्"। **"ज्ञानाकरणकं ज्ञान प्रत्यक्षम्**[४] यथा भाट्टैः स्वीकृतम्। तर्हि अनुमानादीनि ज्ञानान्तरपूर्वकमेव जायन्ते, न प्रत्यक्षं तथा, विषयेन्द्रियसंयोगजन्यत्वात्। अतः प्रत्यक्षस्य ज्ञानाकरणत्वम्। अतः स्वप्रकाशः ज्ञानांशः विषयांशमपि प्रकाशयति। पुनः तत्र अनुमित्यादीनि ज्ञानानि ज्ञानकरणकानि। दण्डिपुरुषः इति प्रत्यक्षज्ञानं न ज्ञानाजन्यं दण्डज्ञानपूर्वकत्वात्।

पुनः स्मृतावपि लक्षणस्यातिव्याप्तिप्रसक्तिः। स्मृतिज्ञानं प्रति संस्कारः करणम्। **"ज्ञात विषयकं ज्ञानं स्मृतिरिति**[५]। संस्कारः न ज्ञानम्, अतः स्मृतिः न ज्ञानपूर्वकम्। अतः मतमिदमपि नास्ति समीचीनम्।

---

१. भाट्टचिंतामणिः १५

२. वेदान्तपरिभाषाः– परिच्छेद। प्र.।

३. प्रमाणसमुच्चयः १–१५

४. तत्रैव

५. भट्टाचिन्तामणिः १–१५

तत्र वेदान्तपरिभाषाकारेण प्रतिपादितं यत्–**प्रमाकरणं प्रमाणम्** इत्यनेन **प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्"** एतेषां मते **"प्रत्यक्षप्रमा त्वत्र चैतन्यमेव"**। **"यत्साक्षादपरोक्षाद् ब्रह्म"**[१] इति श्रुतेः, अद्वैतमते ज्ञानं स्वप्रकाशं स्वतः प्रमाणञ्चेति। ज्ञानस्यापरोक्षत्वं प्रत्यक्षत्वं वा स्वाभाविकम्। अस्ति चेद् ज्ञानं प्रमाणान्तरनैरपेक्ष्येण स्वत एव अपरोक्ष्येण ज्ञायते। तदेव ज्ञानं प्रत्यक्षज्ञानम्। अत्र ज्ञानत्वं प्रत्यक्षत्वम् उच्यते चेद् अनुमित्यादेः ज्ञानत्वात् प्रत्यक्षत्वापत्तिः। तर्हि समाधीयते अत्र विशिष्टस्य ज्ञानस्यास्ति अंशद्वयं–ज्ञानांशः विषयांशश्चेति। यथा घटविषयके ज्ञाने– अयं घटः इति ज्ञानम् विष्यांशः घटमहं जानामि इति ज्ञानं ज्ञानाशः। ज्ञानांशे विषयांशः अध्यस्तः भवति। ज्ञानस्य प्रत्यक्षेण घटादिविषयाणामपि प्रत्यक्षं भवति। तत्र ज्ञानांशस्य नित्यत्वात् स्वप्रकाशत्वाच्च। तत्प्रत्यक्षे चक्षुरादीनां करणानां नास्त्यपेक्षा। विषयांशस्य प्रत्यक्षे पुनः चक्षुरादीनां करणानां उपादेयता तु अस्ति एव। अतः विषयांशप्रत्यक्षे चक्षुरादीनां करणत्वं सिद्धम्। अत एव प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणमिति प्रत्यक्षप्रमाणलक्षणं घटितम्। घटज्ञानस्य विषयः घटः, यश्च चक्षुरादि इन्द्रिय प्रतीतिभूतः। अनुमेयवह्निज्ञानस्य विषयः वह्निः, स च वह्नि नास्ति चक्षुरादिप्रतीतिभूतः। अतः अनुमित्यादेः नास्ति प्रत्यक्षत्वापत्तिः।

ज्ञानं तु सदैव प्रत्यक्षं स्वप्रकाशं नित्यत्वाच्च नास्ति तत्र करणापेक्षा। ज्ञानस्य प्रत्यक्षत्वपरोक्ष-त्वादिव्यवहारस्तु विषयस्य प्रत्यक्षतां परोक्षतां ज्ञाने आरोप्य एव भवति। अत एव स्वप्रकाशं ज्ञानमेव मुख्यं प्रत्यक्षं, घटादिप्रत्यक्षं तु गौणम्। अस्मिन् गौणप्रत्यक्षे इन्द्रियं करणम्। अतः इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति वक्तुं शक्यते गौणप्रत्यक्षम्।

विषयप्रत्यक्षे पुनः ज्ञानांशः अखण्डज्ञानस्यैव अंशः, तस्य नित्यत्वात् चक्षुरादिकरणानां कः उपयोगः? नहि ज्ञानं चक्षुरादिना गृह्यते अपितु विषयः एवं विषयस्य च जडत्वात् ज्ञानभिन्नत्वाच्च प्रमाकरणं प्रमाणमिति लक्षणं कथं समन्वीयते? उच्यते–स्वरूपचैतन्यस्य अखण्डत्वेऽपि घटादिविषयकं यद् ज्ञानं जायते तत्र नित्यम्। तच्च विषयावच्छिन्नं ज्ञानं चक्षुरादि इन्द्रियैः जन्यते, घटादिविषयकं ज्ञानम् इन्द्रियजन्यमेव। अद्वैतमते ज्ञानम् अन्तःकरणवृत्तिः। तथा चक्षुरादीन्द्रियद्वारा वहिर्निर्गच्छद् अन्तः करणं विषयदेशं गत्वा विषयाकारेण परिणमते। अयञ्चान्तःकरणस्य विषयाकारपरिणामः वृत्तिः उच्यते। सा च वृत्तिः इन्द्रियजन्या। तया वृत्या घटादिविषयकं आवरणं दूरीकृत्य विषयः इन्द्रियगोचरः क्रियते। अनया रीत्या एव घटस्य प्रत्यक्षं भवति। अतः विषयेन्द्रियसंयोगे सति अन्तःकरणवृत्ति उदेति इति, इन्द्रियजन्या वृत्तिः वृत्तिजन्यं च ज्ञानम् इति।

वस्तुत इन्द्रियं न घटादिज्ञानकरणम्, घटादिज्ञानस्य अन्तः करणवृत्तिजन्यत्वाद् एवं च जड़घटादि विषयांशे चक्षुरादीन्द्रियाणां करणत्वेऽपि तेषां **"प्रमाकरणं प्रमाणम्"**[२] इत्येवं प्रमाणसंज्ञा युक्तमेव। **प्रत्यक्षस्य द्वैविध्यम्**–घटाद्यंशे प्रत्यक्षं द्विविधम् सविकल्पकं प्रत्यक्षं, निर्विकल्पकं प्रत्यक्षञ्चेति। "वैशिष्ट्यावगाहिज्ञानं सविकल्पकम्"।[३] वैशिष्ट्यं तु विशेषणविशेष्ययोः संबंधः। अतः सविकल्पकमिति लक्ष्यं' वैशिष्ट्यावगाहिज्ञानमिति लक्षणम्। लक्षणे तत्र पदद्वयं वर्तते वैशिष्ट्यावगाहि ज्ञानञ्च। निर्विकल्पके

---

१. तर्कभाषा

२. वेदान्तपरिभाषा १–प्र परि.–४३

३. वेदान्तपरिभाषा. प्र.परि.–४५

अतिव्याप्तिवारणाय वैशिष्ट्यावगाहीति, इच्छादावतिव्याप्तिवारणाय ज्ञानमिति पदं प्रयुक्तम्। यथा घटमहं जानामि इत्यत्र-घटविषयकज्ञानवान् अहम् "इत्यस्मिन् घटविषयकसाक्षात्कारे 'अहं' विशेष्यतया, घटज्ञानं विशेषणतया। तयो घटज्ञानाहंकारयोः सम्बन्धश्च संसर्गतया भासते। घटे यद् घटत्वं विशेषणं, अतः घटघटत्वयोः सम्बन्धश्च संसर्गतया सते। अतः विशेषणे विशेषणं विशेषणतावच्छेदकम्। तथा विशेषणतावच्छेदकं प्रकारकं ज्ञानं वैशिष्ट्यावगाहि ज्ञानं सविकल्पकं प्रत्यक्षम्। अनुव्यवसायात्मकम्।

**संसर्गानवगाहिज्ञानं निर्विकल्पकं प्रत्यक्षम्।**[१७] संसर्गो नाम विशेष्यविशेषणयोः सम्बन्धः। विशेषणविशेष्यसम्बन्धाविषयकं ज्ञानं निर्विकल्पकम्। अर्थाद् यस्मिन् ज्ञाने विशेष्यं विशेषणं तयोः सम्बन्धश्च इत्येतत् त्रयो विषयाः न भवन्ति तज्जानं निर्विकल्पकम्। यथा-"सोऽयं देवदत्तः" इति लौकिकवाक्यजन्यं ज्ञानम्। तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानं वैदिकम्। तच्च निर्विकल्पकं ज्ञानं चक्षुसंयोगादनन्तरं जायमानमपि न प्रत्यक्षानुव्यवसायविषयं भवति।

---

१. बृ उपनि. ३.४.१

२. वेदान्तपरिभाषा। प्र. परि.९८

३. वेदान्तपरिभाषा। प्र. परि.९८

# काव्यसौन्दर्यविमर्शः

प्रो. रहसविहारीद्विवेदी

**लोकोत्तरे हृदाह्लादे लोकोद्बोधे च सङ्गता।**
**प्रज्ञावतः कवेः सद्वाक् काव्यमित्यभिधीयते।।**

**रम्यवस्तुस्वरूपाद् यत्तत्त्वमास्वाद्यमस्ति तत्।**
**तद्विदाह्लादने युक्तं सौन्दर्यमभिधीयते।।**

इति मम नव्यकाव्यतत्त्वमीमासायाम्

कवेर्भावः कर्म वा काव्यम्, 'शब्दार्थयोगुर्णभावेन रसाङ्गभूतव्यापार-प्रवणतया विलक्षणं लोकोत्तरवर्णनानिपुणकविकर्म' इति मम्मटः[१], 'वक्राभिधेयशब्दोक्तिरिष्टावाचामलङ्कृतिरि'ति भामहः[२] 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'ति पण्डितराजः[३]। भामहदिशा 'लोकातिक्रान्तगोचरं वचः वक्रोक्तिः'[४], रमणीयार्थता च पण्डितराजदिशा 'लोकोत्तराह्लादजनकज्ञान-गोचरता', काव्यसरस्वती (वाक्/भाषा) आनन्दवर्धनदिशा-अलोकसामान्यमभिव्यक्ति-'सरस्वती स्वादुतदर्थवस्तु निष्यन्दमाना महतां कवीनाम्। अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।'[५] कुन्तकेन-'लोकोत्तर- चमत्कारकारिवैचित्र्यसिद्धये, काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते'[६] तेन च लक्षणं क्रियते-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लाकारिणि।।**[७]

एवं सर्वे प्राक्तना आचार्या लोकोत्तराह्लादं काव्यस्य प्रमुखं तत्त्वं मन्वते। नव्या आचार्या अपि लोकोत्तरत्वं काव्यस्य स्वीकुर्वते-

---

१. काव्यप्रकाशे १.२
२. काव्यालङ्कारे १.३६
३. रसगंगाधरे प्र.आ.सू. १
४. काव्यालङ्कारे २.८१-८५
५. ध्वन्यालोके १-६
६. वक्रोक्तिजीविते १.२
७. तत्रैव १.७
८. काव्यालङ्कारकारिकायाम् १.१

**आनन्दकोशस्योल्लासे लोकोत्तरविभावना।**
**अलङ्कृतार्थसंवित्तिः कविता सर्वमङ्गला।[१]**

काव्यालङ्कारकारिकादौ रेवाप्रसादो द्विवेदी 'सनातनः'। 'काव्यं लोकोत्तराख्यानमिति[२]–अतिभराजयशो भूषणेऽभिराजो राजेन्द्रमिश्रः।' एवमभिनवकाव्यालङ्कारसूत्रप्रणेतारं राधावल्लभत्रिपाठिनं विहाय प्रायशः' प्राक्तना नव्याश्च काव्यशास्त्रिणः काव्यस्यानन्तस्तत्त्वमन्तः सौन्दर्य वा लोकोत्तत्र्त्वमेव स्वीकुर्वते। आङ् + ह्लाद + घञ् – आह्लादः चित्तस्य द्रवीभाव आह्लादः स चेन्न लौकिकस्तदा लोकोत्तराह्लादः। सुन्दरस्यापि तथैव स्थितिः। सुष्ठु उक्ति आर्द्री करोति चित्तमिति (सु+ उन्द क्लेदने + अर् शकन्धत्वादि साधुः) सुन्दरं (मनोहरम्) 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्, कान्तं मनोहरं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः। मनोहारि सौम्यं भद्रकं रमणीय रामणीयकमिति टीकासु। बन्धूरं, बन्धुरं, पेसलं, वामं, रामं, अभिरामं, नन्तिं, सुषमम्- इति शब्दरत्नावली। वल्गु, हारि, स्वरूपम्, अभिरूपं, दिव्यमिति जटाधरः। सुन्दर + ष्यञ् –सौन्दर्यम्। एवं सुन्दरशब्दस्य सौन्दर्यशब्दस्य वा पर्यायवाचिनोऽनेकेशब्दाः संस्कृतवाङ्मये राराज्यन्ते।

सौन्दर्यशास्त्रस्य सौन्दर्यस्य वा प्रवर्तकः शर्मण्यदेशीयो विद्वान् वाउमगार्टन इति प्रायशो भारतीया अपि विद्वांसः स्वीकुर्वन्ति। संस्कृतवाङ्मये विशेषतः संस्कृतकाव्यशास्त्रं काव्यसौन्दर्यशास्त्रमेव। सौन्दर्यतत्त्वमस्य निरूपणं वैदिककालादद्यावधि दरीदृश्यते। प्राक्तनः प्रशस्तश्चालङ्कारशास्त्री वामनः– सौन्दर्यमलङ्कार[३] इति वक्ति। ततः प्राक् नाट्यशास्त्रे भरतमुनिना विशेषतः षोडशेऽध्यायेऽलङ्काराणां निरूपणं व्यधायि। कालिदासोऽपि–

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।[३]**
**सा निर्मिताविश्वसृजा प्रयत्नादेकस्थसौन्दर्यदृक्षयेव॥**

एवमुक्त्वा सौन्दर्यनिर्मितिजक्रियां प्रतिपादयति। माघोऽपि रमणीयतायाः स्वरूपं व्यनक्ति–'क्षणे-क्षणे यन्नवतामुपैति तदेवरूपं रणीयतायाः।'[४] सर्वेऽपि काव्यशास्त्रिणो नामान्तरेण सौन्दर्यस्य निरूपणमवश्यं कुर्वन्ति। तद्यथा भामहः–

**सन्निवेशविशेषात्तु द्विरुक्तमपि शोभते।**
**नीलं पलाशमाबद्धमन्राले स्त्रजामिव॥**

---

१. अभिराजयशोभूषण १.३४
२. काव्यालङ्कारसूत्रेष् १.२.२
३. कुमारसम्भवे १.४९
४. शिशुपालवधे ४.१७

**किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि।**
**कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम्।।[१]**

आन्दवर्धनः प्रतीयमानार्थस्फुटीकरणे समग्रतायां लावण्यानुभूतेरेवमुपमानं ददाति–

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।[२]**

(एवं सौन्दर्यतत्त्वेन भारतीय अपरिचिता नासन्। तैरन्यपर्यायवाचिना शब्देनास्य निरूपणमकारि संस्कृते प्रायश एकार्थवाचका अनेके शब्दाः।) आनन्दवर्धनस्यानेन कथमेव पोपस्य 'एसे-आनक्रिटिसिज्म' ग्रन्थस्येदं कथनम्–

**In with, as nature, what affects or hearts**
**in not the exactness of peculiar parts,**
**'Ts not a lip, or eye, we beauty call**
**But the joint force and full result of all.**

अद्भुतं साम्यं विभर्ति। एवमेव पाश्चात्यविचारकाणां यन्निरूणं तदवलोक्य ये भारतीया अपि विद्वांसस्तान् सौन्दर्यनिरूपणेऽग्रेसरान् मन्वते, ते भारतीयानां ग्रन्थान् सम्यगधीत्य स्वां भ्रान्तिमपनयन्तु। भारतीयानां कलाया अवधारणा चर्मचक्षुर्भ्यां दृश्यमानात् सौन्दर्यादुपरि गत्वा परमे तत्त्वे विश्रान्तिं लभते–'लीयते परमानन्दे या कला सा कला मता।'

भारते वैदिकात्कालादेव सौन्दर्यावबोधनिरूपणं प्राप्यते। यथा ऋग्वेदे–'का ते अस्त्यरङ्कृतिः सूक्तैः कदा मघवन्। दाशेम।'[३] लौकिके संस्कृतवाङ्मये अलङ्कृतिरलङ्कारो वा शब्दौ प्रयुज्येते। 'अनादिनिधनमि'[४] त्यादिरूपेण भगवतो भर्तृहरेः कथनेन स्फुटमेव यत्प्रथमे विद्वांसो वैयाकरणाः शब्दं ब्रह्मरूपं मन्वते। माहेश्वरसूत्रवर्णसमाम्नाये 'अल्' प्रत्याहारे सर्व एव वर्णा सामग्र्येण अध्याहृताः भवन्ति। अतोऽलङ्कृतिरलङ्कारो वैकत्रसामग्र्यविधाने रूढिङ्गतौ शब्दौ वर्तेते। 'सर्वोपमाद्रव्यसमुच्चयेन . . . एकस्थ सौन्दर्यदिदृक्षेव।' इति पूर्वाद्धृते कालिदासपद्ये तथ्यमिदं परिभाषितमिव निभाल्यते। प्रश्नोऽयं समुदेति यदृग्वेदे तु–'अरङ्कृतिरि'ति शब्दो देवेन्द्रस्तुतौ का ते अस्त्यरङ्कृति'रित्यादौ प्राप्यते। मन्ये–'अर्' प्रत्याहारेऽपि वर्णनामुल्लेखः पूर्णतां याति यतो हि हकारो 'हयवरट्' सूत्रे तु पठितमेव। माहेश्वरसूत्रेषु हकारो वारद्वयं पठितमेव। माहेश्वरसूत्रेषु हकारो वारद्वयं पठित इति विद्वांसो

---

१. काव्यालङ्कारे १.५४,५५
२. ध्वन्यालोके १.४
३. ऋग्वेदे ७.२९.३
४. वाक्यपदीये ब्र.का. १.१

जानन्त्येव। कालान्तरे-'अलम्' इति भूषणपर्याप्तिवारणेषु प्रसिद्धिङ्गतम्। 'अलम्भावस्तु पूर्णता' मान्यतेयं चिरनवीना। 'न कान्तमपि निर्भूषं विभाति वनिताननम्'[१]-इति भामहो वक्ति। एवमलङ्कारेण काव्ये पूर्णता प्रसरति। वस्तुतोऽलङ्कारशास्त्रमिति कथनेनाद्यापि काव्यशास्त्रस्य साहित्यशास्त्रस्य वा बोधो भवति। अलङ्कारशास्त्रपरिधौ रसध्वनिगुणरीतिवक्रोक्त्यौचित्यादिकाव्य-तत्त्वानि समाहितानि भवन्ति। रसशास्त्रं ध्वनिशास्त्रमित्यादिनाम्ना काव्यशास्त्रं केनापि नोक्तम्। अत्रालङ्कारशब्दो व्यापकेऽर्थे प्रयुक्तः। वामनादिमतेन चेत् 'सौन्दर्यमलङ्कारः'[२] तदा सौन्दर्यशास्त्रमपि काव्यशास्त्रस्यैव पर्यायतामङ्गति। एतत्सत्यं यदलङ्कारशास्त्रे केवलं वाग्गतं सौन्दर्यं विशेषरूपेण प्रतिपादितम्। काव्याधिकरणरूपेण वाक्, शब्दः, अर्थः, शब्दार्थौ, वाक्यम्, पदावली, कीर्तनम्, आख्यानम् प्रभृतिशब्दाः[३] प्रयुक्तः। येनात्र वचागादिगताह्लाद एव परिगणितो भेवत्। अन्यथा चित्रमूर्तिवास्तुनृत्यादिषु सङ्गत्वात् काव्यलक्षण-मितिव्याप्तिदोषग्रस्तः स्यात्। लोकोत्तराह्लादे प्रायशः सर्वेषां काव्यशास्त्रिणामैकमत्यं किन्तु तदधिकरणे क्वचिद्द्वैमत्यं दृश्यते। मयाऽत एव 'वाक् काव्यमित्युक्तं यतोहि वाचि शब्दार्थादयः स्वयं सन्निहिताः सन्ति। शब्द इति कथनेन श्रोत्रेन्द्रियमात्र-ग्राह्यो भेर्यादिध्वनिरपि-अवगतो भवति। वागिति कथनेन तद्भेदाः परा-पश्यन्ती- मध्यमा-वैखरीति मानवगताश्चत्वारोऽपि परिगणिता भवन्ति। पुनर्वागिति शब्दतो मानववाण्या एव बोधो भवति यस्यां कवेः काव्योन्मेषः सहृदयस्य चानुभूतिरासाते।

काव्यात्मा कः? ध्वनिरित्यानन्दवर्धनः, रीतिरिति वामनः रस इति राजशेखरादयः, जीवितमिति शब्दतः-वक्रोतिरिति कुन्तकः, औचित्यमिति क्षेमेन्द्रः, अलङ्कार इति सनातनो रेवाप्रसादो द्विवेदी त्रिपाठी राधावल्लभश्च। यथा दृश्यमाने वपुषि जीवात्मा महत्त्वावहस्तथैव काव्ये चैतेषां महत्त्वम्। यथा वाचा भेदे शब्दार्थवाक्यपदावलीत्यादीनां समाराहो भवति तथैव लोकोत्तराह्लादे काव्यशास्त्रिभिः प्रोक्तानामात्मतत्त्वानामन्तर्भावो भवति। अत एव मया स्वकीयायां नव्यकाव्यतत्त्वमीमांसायां प्रत्यपादि-

**रसोऽलङ्काररीती च ध्वनिर्वक्रोक्तिरौचिती।**
**यान्ति लोकोत्तराह्लादमर्णवं सरितो यथा॥**

वस्तुतः सर्वेषु काव्येष्वेतेषां मिश्ररूपमेव निभाल्यते। 'भिन्नरुचिर्हि लोक' इति न्यायात्स्वानुभूतकाव्यतत्त्वस्य सर्वप्रामुख्यं काव्यशास्त्रवेतृभिः निर्णीतम्। तथापि प्रायश आचार्याः अन्येषामाचार्याणां निरूपितं काव्यतत्त्वमपि स्वग्रन्थे निरूपयन्ति। यथा मम्मटो रसं ध्वनिञ्चाद्रियते किन्तु गुणालङ्काराणामपि निरूपणं करोति। अलङ्कारस्य महत्त्वं स्वीकुर्वन्नपि भामहो 'रसैश्च सकलैः

---

१. भामहकाव्यालङ्कारे १.१३

२. काव्यालङ्कारसूत्रे १.१.२

३. वाक्-जयदेवः, शब्दः-पण्डितराजः, अर्थः-रेवाप्रसादो द्विवेदी, शब्दार्थौ-मम्मटादयः, वाक्यम्-विश्वनाथः, पदावली-दण्डी, कीर्तनम् राधावल्लभस्त्रिपाठी, आख्यानम्-अभिराजराजेन्द्रमिश्रः

पृथक्[१] इत्युक्त्वा महाकाव्ये रसस्थितिं निरूपयति। एवमेव दण्डी 'मुधरं रसवद्वाचि वस्तुन्यपि रसस्थितिरि त्येवं वक्ति। विश्वनाथपण्डितराजावप्यलङ्कार-निरूपणे दत्तावधानौ विलोक्येते यौ रसवादिनौ विद्वद्भिः कथितौ। एतेन सिद्ध्यति यल्लोकोत्तराह्लादभेदान्येव रसध्वन्यादिकाव्यतत्त्वानि सन्ति।

शब्दव्युत्पत्तिदिशाऽपि सौन्दर्यमाह्लादश्च चित्तस्यार्द्रीकरणे धातु प्रत्ययदृष्ट्या सङ्गतौ वर्तेते। यद्यपि सर्वाण्येव काव्यतत्त्वानि लोकोत्तराह्लादमुद्दश्यैव प्रवर्तन्तेऽतः समेषां समानं महत्त्वमस्ति। अग्निपुराणकारेण 'इष्टार्थव्यवच्छिन्ना पदावली' काव्याधिकरणमुक्तमासीत्, किन्तु दण्डिना ततः प्राक् 'शरीरं तावत्' संयोजितम्-शरीरं तावदिष्टार्थव्यच्छिन्ना पदावली।' एतेन काव्यस्य मानवीकरणं सञ्जातम्। वामनेन रीतिरात्मा काव्यस्य, आनन्दवर्धनेन 'काव्यस्यात्माध्वनिः'[२] राजशेखरेण च 'रसादिश्चात्मा[३]' इत्यादिरूपेण काव्यात्मतत्त्वं प्रतिष्ठापितम्। काव्यात्मतत्त्वस्वीकृत्याऽन्येषां मानवावयवानां भाषादिशा काव्यतत्त्वदिशा च अङ्गानीव स्थानानि निर्धारितानि। यथाऽह राजशेखरः-

'शब्दार्थौ ते शरीरं संस्कृतं मुखं प्राकृतं बाहुः जघनपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदार ओजस्वी चासि। उक्तिचणं च ते वचः, रस आत्मा, रोमाणिच्छन्दांसि, प्रश्नोत्तर प्रहेलिकादिकञ्च वाक्केलिः अनुप्रासोपमदयश्च त्वामलङ्कुर्वन्ति।[४]

अत्र राजशेखरः काव्यपुरुषस्याङ्गेषु यद्भाषाणां मुखादिरूपेण स्थानानि निर्धारितानि तत्कथं साधु स्यादिति ममाल्पमतिर्नावगच्छति शब्दार्थौ तु समग्रशरीरम्, कस्याश्चिदपि भाषायाः काव्यं स्यात्तत्र शब्दार्थयोरुपस्थितिस्तु भविष्यत्येव। समः प्रसन्नो मधुर उदार ओजस्वी चासि'[५] इत्यनेन गुणाः सङ्केतिता मानवकाव्यगुणयोर्नामान्यपि समानानि एते गुणाः काव्ये भवन्तु मानवे वा तच्छ्रेष्ठत्वमेव प्रमाणयन्ति, संवेदनेनैते सम्बद्धा अतो रसेन प्रतीयमानेन वा सम्बद्धाः। यथाह वामनः-'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलङ्काराः[६] आनन्दवर्धनः-

**तमर्थमलम्बन्ते येऽङ्गिनं ते गुणाः स्मृता।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥**

मम्मटेन काव्यप्रकाशस्याष्टमे उल्लासे प्रथमाद्वितीया च कारिकेऽनयोरेवाचार्ययोर्मतमनुहृत्य प्रणीते। यथाऽलङ्करणधारणाऽभावेऽपि गुणवान् पुरुषः कश्चित्स्वागतार्हस्तथैवालङ्काराभावेऽपि यदि गुणाः सन्ति तर्हि काव्यमाह्लादकं भवति। नेयं विमर्दक्षमाविचारसरणिः। वस्तुतः काव्यपुरुषायालङ्कृतो

---

१. भामहकाव्यलङ्कारे १.२१
२. ध्वन्यालोके १.१
३. काव्यमीमांसा तृ. अध्याये
४. तत्रैव
५. तत्रैव
६. काव्यालङ्कारसूत्रे ३.१.१

मानव उपमानरूपेण प्रयुक्तः। काव्यपुरुषो न तादृशो मानवो यो लोकव्यवहारे क्वापि कटककुण्डलाङ्गुलीयकादीनि परित्यजति पुनश्च धारयति। 'सञ्चारिणी दीपशिखेव'[२८] इत्यादिपद्यतो 'दीपशिखा' कदापि न पृथग् भविष्यति किन्तु मानवस्य कुण्डले तु पृथग् भवतः। अतः 'सालङ्कारस्य काव्यता' इति कुन्तकः, 'सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिरि'ति च मम्मटो वक्ति। अन्याह्लादकतत्त्वप्रामुख्ये भवतु नामालङ्कारोऽस्फुटः किन्तु तदभावो नानुमतः। एवमेवालङ्कारप्रामुख्ये भवतुनाम स्फुटप्रतीयमानराहित्यं किन्तु-अस्फुटरूपेण तु रसस्य ध्वनेर्वक्रोक्तेर्वाऽस्थितिस्तु भविष्यत्येव, अन्यथा काव्यमेव न स्यात्। एतेन तथाकथितानामात्म-तत्त्वानामलङ्काराणाञ्च समानं महत्त्वम्। सम्प्रति तु सनातनेन रेवाप्रसादद्विवेदिनां[२९] त्रिपाठिना राधावल्लभेन[३०] चालङ्करस्यापि काव्यात्मत्वं स्थापितम्। अतस्तदभावे आत्मानं बिना जीवा इव काव्यं भविष्यति।

ऋग्वेदे कविवाग्वैशिष्ट्यप्रतिपादने तस्या माधुर्य प्रशंसितम्, रूपप्रतिपादने च तस्य सौन्दर्यं प्रशंसितम्। 'मधुमद्वचोऽशंसीत काव्यः कविः'[३१] 'का ते अस्त्यरङ्कृतिः सूक्तैः कदा मघवन् दाशेम।'[३२] इति च। माधुर्यं जिह्वया, सौन्दर्य नेत्राभ्याञ्च ग्राह्यं भवति। रसनेन्द्रियमात्रग्राह्यो गुणो रसः, चक्षुरिन्द्रिमात्रग्राह्यो गुणो रूपम्।[३३] रसः पीयते रूपं दृश्यते, उभयोरनुभूतिश्चेतसा क्रियते। अतः क्वविद् रूपस्य पानं रसस्य च दर्शनं मनीषिणः कवयश्च वर्णयन्ति। 'रसो वै सः' निपीय यस्य क्षितिरक्षिणः कथाम्[३४] 'पपौ नियेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्।[३५] यद्यपि शब्दस्पर्शरूपरसगन्धाः क्रमशः श्रोत्रत्वग्चक्षुर्जिह्वाघ्राणेन्द्रियविषयास्तथापि विशिष्टभावोन्मेषे गभीरार्थाभिव्यञ्जनार्थं शब्दरूपेऽपि पेये भवतः। इदमेव क्रत्वं ध्वनित्वञ्च।

पञ्चमहाभूततत्तन्मात्रक्रमेण काव्यरसानुभूतिः सौन्दर्यानुभूतिर्वा भवति। यथोक्तं मया स्वनव्यकाव्यतत्त्वमीमांसायाम्-

१. ध्वन्यालोके २.६
२. रघुवंशे ६.६७
३. काव्यप्रकाशे १.४ वृत्तौ स्थितो यतः, अन्यकायस्थितो कारिकायाम् ४६ तथा च विभक्तात्मा विभुजीवब्रह्मणोश्चिद्घनो यथा। तत्रैव ४८१
४. काव्येऽलङ्कार एवात्मा स एवास्मिन् धर्मः किमयत्रात्मतां व्रजेत्। काव्यलङ्कार अलम्भावोह्लङ्कारः स च सौन्दर्यतत्कृतोः।
५. पूर्णता चालङ्कार १.१.९ तेनालङ्काकार एव काव्यम् १.१.१० सर्वेष्वलङ्कारोंव्याप्तः १.५.४ अलङ्कारः काव्यजीवनम् २.१.१ आधिभौतिकाधिदैविकाध्यात्मिकं विश्वत्रयसमुन्मीलनपुरस्सरं भूषणवारणपर्याप्त्याधायकत्वमलङ्कारत्वम् २.१.२, अलम्भावमाधातु कविना सम्पद्यमाना प्रक्रिया कविव्यापारः अभिनवकाव्यालङ्कारसूत्रेषु २.२.१ अलम्भावस्तु पूर्णता।। अभिनवकाव्यालङ्कारसूत्रेषु।
६. ऋग्वेदे ८.८.११
७. तत्रैव ७.२९.३
८. तर्कसङ्ग्रहे
९. नैषधीयचरिते १.१
१०. रघुवंशे २.१९

**शब्दः श्रुत्या स्पृशति हृदयं रूपतो रस्यमान–**
**श्चान्तर्भूमिं नयति स पुरः शब्ददेवो बराहः।**
**व्योम्नो वातस्तदयमनलस्तज्जलं भूमिदं यत्**
**काव्यास्वादक्रम इह परो यो हि तन्मात्रमार्गी॥**

माधुर्यं रसः सौन्दर्यमलङ्कृतिः सौन्दर्यं नेत्राभ्यां रसोहृदाऽनुभूयते। एतदर्थं मया तत्रैव प्रोक्तम्–

**सौन्दर्यं तन्नयनविषयं रम्यरूपं व्यनक्ति**
**माधुर्यं तद्रस इति हृदाऽऽस्वाद्यमानं विभाति।**
**सौन्दर्यं यल्लसति पदतश्चार्थतोऽलङ्कृतिः सा**
**योऽलङ्कृत्योपकृतमधुरोऽलौकिकोऽयं रसोऽस्ति॥**

शास्त्रकाव्योभयप्रज्ञामण्डितो महाकविः कालिदासः शाकुन्तलीये वस्तुविन्यासेऽनुभूतिप्रक्रियामेवं व्यनक्ति–

**रम्याणि वीक्ष्य मधुराँश्च निशम्य शब्दान्**
**पर्युत्सुकी भवति यत्सुखितोऽपि जन्तुः।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि॥[१]**

कालिदासाय सुन्दरसौन्दर्यशब्दावधिकं न रोचेते, तेन–मनोज्ञ– मनोहर– मधुर–रमणीय–चारु–ललित–सुभग–रमणीयता–माधुर्य–चारुता–लालित्य–सौभाग्य–शब्दाः प्रायशः प्रयुक्ताः। वस्तुतः स निसर्गकविः। अनुभूतिनिरूपण–परेऽस्मिन् पद्ये रम्यमधुरशब्दौ कालिदासेन प्रयुक्तौ विद्येते। अत्र पर्युत्सुकीभावः केन्द्र विद्यते। तच्चेतसा स्मरति नून्मबोधपूर्वम्'–इति वाक्ये–एकतो बुद्धिरन्यतश्च चेतः, अन्तःकरण–वृत्तित्त्वादुभौ शब्दौ समार्थकौ प्रतीयेते, किन्तु भारतीयायां दार्शनिक्यामवधारणायां चेतो बुद्धेः परतरं ततु चैतन्यमतश्चेतसा स्मरणे–इत्यत्र सामान्यं स्मरणं नास्ति तत् साक्षात्काररूपमस्ति। बुद्धितोऽर्थग्रहणे व्यावहारिकस्य जगतो ज्ञानं भवति किन्तु चेतसा स्मरणेऽबोधपूर्वः काव्याह्लादोऽनुभूतो भवति।

कविवाङ् निर्मितिर्विलक्षणा भवति सा च नियतिकृतनियमरहिता। काव्यस्य पठने श्रवणे न दीपशिखा भवति नेन्दुमती किन्तु रात्रौ प्रकाशरहिते राजमार्गे व्यवहारकाले चलन् क्वचित्सहृदय एकं प्रकाशयुक्तं वाहनं पश्यति तस्य प्रकाशतस्तत्समक्षं स्थितानि सर्वाणि वस्तूनि प्रकाशितानि भवन्ति किन्तु यदा तदग्रेसरति तदा सर्वाणि वस्तूनि विवर्णतां गच्छन्ति। एतद् दृश्यं सहृदयचेतसि स्थितं भवति

---

१. अभिज्ञानशाकुन्तले ५.२

स यदा कालिदासीयमेतत्पद्यं सञ्चारिणी दीपशिखेव-इति पठति शृणोति तदाऽबोधपूर्वं दृश्यमिन्दुमती-स्वयंवरस्य साक्षात्करोति।

अत्र कालिदासेन 'रम्याणि वीक्ष्य मधुराँश्च निशम्य शब्दान्' इत्यत्र रम्याणि (सौन्दर्यमयानि दृश्यानि) अवलोक्य चक्षुसात्कृत्वा मधुरान् शब्दान् निशम्य अर्थात् स्वादु शब्दान् श्रुत्वा सहृदयः पर्युत्सुकी भवति। 'मधुरं' रसवद्वाचि वस्तुन्यपि रसस्थितिः'[१] -इति दण्डिना प्रोक्तम्। एतेन माधुर्यं रसवत्वं द्योतयति रम्यता (सौन्दर्यमलङ्कृतिर्वा) रसमुपकरोति। 'रसो वै सः' 'रस ह्येवायं लब्ध्वान्दी भवति' एतच्चेतसो व्यापारः। ब्रह्मास्वादे साक्षादिन्द्रियाणां प्रवृत्तिर्न भवति। अतः प्राक्तना आचार्या रसं ब्रह्मास्वादसहोदरं मन्वते। 'स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादि विषयकरत्यादिमद-भेदबोधो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसः।'[२] इति पण्डितराजो वक्ति।

सहृदयो रसानुभूतिं सौन्दर्यानुभूतिं वा करोति। लोकोत्तराह्लादस्यैवाभिव्यक्तिप्रक्रियामाश्रित्य रसोऽलङ्कारो रीतिध्वनिर्वक्रोक्तिरौचित्यमिति प्रकारा भवन्ति। काव्येषु प्रायश एतेषां समिश्ररूपमेव प्राप्यते। काव्यात्मरूपेण जीवितरूपेण कथितानां तत्त्वानां भवतु नाम प्राधान्यं किन्तु तत्रान्यानि-अपि तत्त्वानि गौणरूपेण स्थितानि भवन्ति। कानिचित्पद्यानि-एतादृशान्नि सन्ति, यस्मिन् सर्वाणि आत्मतत्त्वरूपेण कथितानि-अन्वेष्टुं शक्यन्ते। यादृशी भावना यस्य सिद्धिर्भवति तादृशी' 'ये यथा मां प्रपद्यन्ते ताँस्तथैव भजाभ्यहम्' 'जाकी रही भावना जैसी हरि मूरति देखी ति तैसी,' प्रभृत्यभ्युक्तयो भावकभावना-रूपमनुभूतिर्भवतीति तथ्यं पुष्णन्ति। अस्मिन् सन्दर्भे मम नव्यकाव्यतत्त्वमीमांसायामुक्तम्-

काव्ये लोकोत्तराह्लादः परमात्मेव विद्यते।
रसध्वन्यादयः सन्ति जीवात्मानस्तदंशतः॥

कविभावकयोर्भावे प्रतिभायायां च भेदतः।
काव्ये नैकविधाह्लादः सर्वकाव्येषु विद्यते॥

दृष्टिभेदेन काव्येऽत्र तत्त्वभेदोऽनुभूयते।
अन्तर्भावो विरोधो वा नैव द्रोहाय कल्पते॥

खण्डनं शास्त्रकाराणां बुद्धिनैर्मल्यहेतवे।
तत्त्वपोषणजीवातुः शास्त्रचर्चाविवर्धकम्॥

प्रत्यक्षं यत्कवेर्वस्तु वक्रोक्त्या ध्वनिनाऽथवा।
विभावाद्यैरलङ्कृत्या रीतिभिश्चारुकल्पितम्॥

---

१. काव्यदर्शे १.५१
२. रसगङ्गाधरे (चौ.) पृ. १२०

**अनुव्याहृत्य सद्वस्तु संस्मारयति चेतसा।**
**तेनालौकिक आह्लादो भावकेनानुभूयते॥**

**काव्यतत्त्वदृशैकस्मिन् पद्ये प्रस्थानभावतः।**
**वक्रोक्तिध्वन्यलङ्कारसौचित्यादिसंस्थितिः॥**

अत्र ध्वन्यालोके द्वितीयोद्योते काव्यप्रकाशे च चतुर्थोल्लासे समुद्धृतं द्वादशाधिकशततमं पद्यं 'स्निग्धशलामल–'[१] मित्यनुसृत्य रचिते मम श्लोकेऽवलोकनीया समेषां काव्यात्मतत्त्वानामवस्थितिः–

**सिक्तवातान् बलाकाँश्च केकास्तत्सुहृदो घनान्।**
**सर्वान् सहेऽस्मि रामोऽहमास्से सीते! प्रिये! कथम्?**

स्वोद्धृते पद्ये 'स्निग्धश्यामल'–इत्यस्मिन् टिप्पणीं कुर्वन् मम्मटो वक्ति–'रामोऽस्मि इति–अर्थान्तरसङ्क्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जनानुप्रवेशेन चार्थान्तर-सङ्क्रमित-वाच्य-रसध्वन्योः सङ्करः। एवमन्यदप्युदाहार्यम्।'[२] एवमस्मिन् पद्ये मम्मटो रसस्य ध्वनेश्चावस्थितिं स्वयं स्वीकरोति। अत्रान्यकाव्यतत्त्वान्यपि सन्ति यथा–

**वैदग्ध्यभङ्गीभणितिः रामे काठोर्यबोधिका।**
**अतोऽत्र पदवक्रोक्तिः कुन्तकस्य मतेऽन्विता॥**

कुन्तको वक्ति 'यत्र रुढिशब्दस्यैव प्रस्ताव-समुचितत्वेन वाच्यप्रसिद्ध-धर्मान्तराध्यारोपगर्भत्वेन निबन्धः स पदपूर्वार्द्ध-वक्रतायाः प्रथमः प्रकारः यथा–'रामोऽस्मि सर्वं सहे' ध्वन्यालोके समुद्धृतं 'स्निग्धश्यामल–' पद्यमेवात्रोदाहरणार्थ प्रयुक्तम्।

**न्यग्भावित रामार्थो कठोरार्थं व्यनक्ति सः।**
**पदध्वनिरतो मान्यो ध्वनिकारमतेऽन्विता॥**

आनन्दवर्धनो वक्ति–'इत्यत्र रामशब्दः। अनेन हि व्यङ्ग्यधर्मान्तरपरिणतः संज्ञी प्रत्याय्यते, न संज्ञिमात्रम्।' अतः रामशब्दोऽर्थान्तरसङ्क्रमितवाच्यः।

**आस्से सर्वं सहे सीते पदेष्वत्र हि दृश्यते।**
**सकार पुनरावृत्तिरतोऽनुप्राससङ्गतिः॥**

समेषाचार्याणामतेऽत्रानुप्रासालङ्कारः, कुन्तकदिशाऽत्रवर्णविन्यासवक्रता विद्यते।

---

१. काव्यप्रकाशे उदा. ४.११२

२. तत्रैव

**सीताविरहसन्तापो मेघोदीप्त्या विभावितः।**
**विप्रलम्भो रसश्चात्र भरतस्य मतेऽन्वितः।।**

अत्रालम्बनविभावो राम उद्दीपनविभावा घनादयः सीतायाः स्मरणं सचारी भावः, रामेऽनुभावस्थितिः सहृदयकल्पिता-एतेषां संयोगाद् विप्रलम्भशृङ्गरस्य निष्पत्तिः।

**वर्षासु विरहोद्दीप्तिः प्रियाभावेऽभिवर्द्धते।**
**रामस्य कथने चात्र कालौचित्यं हि सङ्गतम्।।**

एवमत्र क्षेमेन्द्रदिशा कालौचित्यं स्फुटमेव।

**श्लोको ह्यस्पृष्टदोषोऽयं गुणानामत्र संस्थितिः।**
**अतो रीतिर्हि वैदर्भी वामनस्य मतेऽन्विता।।**

अनेन प्रकारेण येषां काव्यात्मत्वं पूर्वाचार्यैः प्रतिपादितं तानि सर्वाणि आत्मतत्त्वानि पद्येऽस्मिन् सङ्गतानि।

एतदपि सत्यं यद् यैराचार्यैर्यानि काव्याह्लादकतत्त्वानि काव्यात्मरूपेण संस्थापितानि तेषु व्यापकेऽर्थेऽर्थविस्तरे वा सर्वाण्येवात्मतत्त्वानि ह्यन्तर्भवन्ति। किमपि महत्त्वपूर्ण काव्यतत्त्वमाचार्यैरनुभूतं तस्यापि सहृदयेषु प्रतिष्ठा स्याद् एतदर्थं महता कण्ठेन सप्रमाणं तस्यावस्थितिः प्रत्यपादि। बहुधा व्याकृततत्त्वनिरूपणेन पिष्टपषणं तेभ्यो न रोचते। तद्यथा 'बहुधा व्याकृतः सोऽन्यैस्ततो नेह प्रतन्यत'[१] इति ध्वनिकारः 'मिश्राणि नाटकादीनितेषामन्यत्र विस्तारः।[२] दण्डी 'उक्तं तदभिनेयार्थमुक्तोऽन्यैस्तस्य विस्तरः।[३] भामहः। लोकव्यवहारभाषातः शास्त्रभाषातो वा काव्यवाग् भिन्ना भवति, सा काव्ये विन्यासविशेषभव्या भवति यथाह शिवलीलार्णवे-

**यानेव शब्दान् वयमालपामो यानेव शब्दान् वयमुल्लिखामः।**
**तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्तिः।।[४]**

अस्यैव विन्यासविशेषस्य नामकरणं रसध्वन्यादिरूपेण काव्यशास्त्रिभिः कृतम्।

अन्यभाषा प्रभावेण नव्यान्यपि काव्यतत्त्वानि सुधीभिरूहितानि बिम्बबिंरेचनादीनि। रामविरहदशासूचकं पूर्वोद्धृतं पद्यमेतेषां दृष्ट्याऽपि संगतार्थ भवति। प्रथमं ब्रिम्बदिशा विचार्यते। बिम्बस्य मम काव्यतत्त्वमीमांसायामेवं परिभाषा कृतास्ति-

१. ध्वन्यालोके १.३
२. काव्यार्शे १.३१
३. भामहकाव्यालङ्कारे १.२४
४. शिवलीलार्णवे १.१३

**काव्यसृष्टिक्षणे कर्तुश्चित्ते नानानुभूतयः।**
**कल्पनामधिरोहन्त्यो वैखरीव्यक्तिबिम्बिताः॥**

**भावकेन्द्रियसंस्कारा भावावेष्टिताः समाः।**
**प्रत्यक्षमिव दृश्यन्ते, काव्यबिम्बः स कथ्यते॥**

**स बाह्याभ्यन्तराभ्याञ्च करणाभ्यां द्विधामतः।**
**बाह्ये दृश्यं ध्वनिः स्पर्शो गन्धास्वादौ च पञ्चधा॥**

**आभ्यान्तरे स्थितो भावः प्रज्ञा चेति द्विधाकृतः।**
**प्रत्येकं बहवो भेदा सङ्करैकलभेदतः॥**

विचारणीये पद्ये चाऽस्यान्वितिः–

**वर्षाकाले प्रियाऽभावे रामोक्तौ तन्मनस्स्थितौ।**
**वियोगिमानसो बिम्बः प्रत्यक्षी क्रियते बुधैः॥**

पश्चात्यैः प्रायशो दुःखान्तरचनाः क्रियन्ते। दुःखान्तरचनासु दयाभयादि भावाः सहृदये जागरिता भवन्ति तैश्च विरेचनमेतासां रचनानां प्रयोजनं भवति। युनानीशब्दस्य (Katharsis) कथार्सिसेत्याख्यस्य हिन्दीसमीक्ष-कैर्विरेचनमितिसंज्ञया प्रयोगः क्रियते। विचारणीयपद्यपरीक्षणात्प्राक् तत्स्वरूपं प्रस्तूयते–

**विरेचकेन चूर्णेन शुद्धिं याति यथोदरम्।**
**तथाविरेचनात्काव्ये मनः शुद्धिर्विधीयते॥**

**दुःखदं वर्णनं दृष्ट्वा तस्य हेतुविचारणे।**
**मनोलग्नं भवत्यत्र दयाभावो विवर्द्धते॥**

**पीडकैः पीडितान् दृष्ट्वा तदावेगेन भावकैः।**
**तथा दुष्कृतकार्याद्धि मनोऽत्र विनिवार्यते॥**

प्रकृते पद्ये विरेचनस्थितिस्त्वेवम्–

**सत्प्रियाहरणं नैव कदाप्युचितं यथा।**
**रावणेन कृतं चैषा भावशुद्धिर्विरेचनात्॥**

एकस्य पद्यस्य विविधकाव्यतत्त्वैर्मूल्याङ्कनेन तथ्यमिदं स्फुटं भवति यल्लोकोत्तराह्लादस्यैव भावकानुभवदृष्ट्या विविधप्रकारा विद्यन्ते। आदौ चानेकेषां काव्यशास्त्रिणां लोकोत्तराह्लाद ऐकमत्यं तत्तत्कथनमुद्धरणपुरस्सरं प्रस्तुतीकृत्। पुरा तावद् 'रसो वै सः' इति श्रुतिवाक्यप्रभावादानन्दकृतेऽलौकि-

कानन्दकृते च रसशब्द एव प्रचलित आसीत् किन्तु नाट्यशास्त्रे विभावानु-भावसञ्चारि-भावसंयोगाद्रसनिष्पत्तिरिति नाट्यानुभूतिदिशा भरतमुनिना प्रत्यपादि, ततः श्रव्यकाव्येष्वपि तदवस्थितिरभिस्वीकृता किन्तु श्रव्यकाव्यदिशा सर्वत्र विभावादयो न प्राप्यन्तेऽतो ध्वनिवक्रोक्तिरीत्य-लङ्कारादीनां दृष्ट्याऽपि काव्यमूल्याङ्कनं प्रारब्धम्। एते सर्वेऽपि काव्यतत्त्वप्रकारा लोकोत्तराह्लादस्यै-वंशाः।

उन्द क्लेदने धातोः अर् प्रत्यये कृते सुन्दरशब्दो निष्पद्यते, आङुप-सर्गपूर्वकह्लादधातोः घञ् प्रत्यये कृते आह्लादशब्दो सिद्ध्यतीति पूर्वमेव मया प्रत्यपादि। अतो व्युत्पत्तिदिशाऽत्र हृदयस्य द्रवीभाव एवावगम्यते। वामनेन सौन्दर्यमलङ्कार इति व्यापकेऽर्थे व्यलेखि किन्तु बहुभिराचार्यैस्तथा स्वयमपि तेन काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्कारा इति प्रत्यपादि। अतो गुणेभ्योऽलङ्कारा अधरीकृताः आनन्दवर्धनमम्मटादिभिरङ्गिसम्बद्धा गुणा अङ्गसम्बद्धाश्चालङ्कारा वर्णिताः। काव्यपुरुषरूपकेण मानवालङ्कार इवालङ्कारः मानवगुण इव गुणः सञ्जातः। गुणस्तु-आत्मनो धर्मः, अलङ्कारः शरीरशोभावर्धकः अनित्योऽपि अनित्योऽपि स वर्तते। अतोऽलङ्कारा अधरीकृता रसादेराह्लादतत्त्वस्य महत्त्वं जातम्। सम्प्रति सनातनेन रेवाप्रसादद्विवेदिना तथा च राधावल्लभत्रिपाठिना अलङ्कारोऽपि काव्यत्मरूपेण प्रतिष्ठापितः। रसवादिभिरपि प्रायशोऽलङ्काराणां निरूपणं कृतम्, अलङ्कारवादिभिरपि रसस्य महत्त्वं स्वीकृतम्। अत एकं प्रति-आग्रहो नोचितः। काव्येषु यत्र यस्मात् काव्यतत्त्वाल्लोकोत्तराह्लादानुभूतिर्भवति तदेव काव्यसौन्दर्यमिति। शम्।

# वेणीसंहारे वर्णविन्यासवक्रता

श्रीराकेशकुमारशर्मा

भारतीयकाव्यशास्त्रे काव्यसमीक्षासन्दर्भे षड्सम्प्रदायाः प्रसिद्धाः सन्ति तेषु वक्रोक्तिसम्प्रदायो विशिष्टं स्थानं बिभर्ति। वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकोऽस्ति कुन्तकाचार्यः। तस्य मते वक्रोक्तिः काव्यजीवितम् अस्ति। अस्या वक्रोक्तेः सः षड्भेदान्[1] प्रतिपादयति यत्र वर्णविन्यासवक्रतायाः काव्ये विशिष्टं महत्त्वं भवति। यतोहि कुन्तकाचार्यमते काव्यलक्षणमस्ति–

**शब्दार्थौ सहितौ वक्र कविव्यापारशलिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[2]**

अथ शब्दार्थौ द्वावपि अलङ्कार्यौ स्तः। तयोरलङ्कृतिश्च वक्रोक्तिरस्ति–

**उभावेतालङ्कार्यौ तयोर्पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्य भंगीभणितिरुच्यते।।[3]**

अत्र च शब्दस्यालङ्कृतिरेव वर्णविन्यासवक्रतास्ति।

### वर्णविन्यासवक्रतायाः भेदा विभेदाश्च

तत्र वक्रोक्तिजीविते कुन्तकाचार्येण सर्वविधां वक्रोक्तिं विवेचयता वक्रोक्तेः प्रथमप्रकारत्वेन वर्णविन्यासवक्रता निर्दिष्टास्ति तथा चैतस्याः वर्णविन्यासवक्रतायाः बहवो भेदाः निर्दिष्टाः सन्ति। तत्र सर्वप्रथमं वर्णविन्यासवक्रतां विवेचयता स्वल्पान्तरं वर्णविन्यासवक्रता चर्चिता, तदनु व्यवधानरहिता वर्णविशेषावृत्तिरूपा वर्णविन्यासवक्रता विवेचिता। इत्थं वर्णविन्यासवक्रता स्वल्पान्तरवर्णावृत्तिरूपा तथा चात्यवधानरहिता वर्णावृत्तिरूपा द्विविधा प्रकाशिताऽस्ति द्विविधायाश्चास्यां वर्णसङ्ख्याभेदानुसारं वर्णविशेषभेदानुसारं च बहुविधत्वं विवेचितम्। तत्र वर्णविन्यासवक्रतायाः स्वल्पान्तरसंज्ञकस्य प्रथमप्रकारस्य विषये कुन्तकाचार्येण कारिकाद्वयं प्रस्तुतम्। यत्र स्वाल्पन्तरा वर्णविन्यासवक्रता ह्येकवर्णावृत्तिरूपा

१ व. जी. १/१९-२१
२ व. जी. १/७
३ व. जी. १/१०

वर्णद्वयावृत्तिरूपा बहुवर्णावृत्तिरूपा च त्रिधा भवति। अत्र प्रथमकारिकायां वर्णावृत्तिविषये पुनः पुन इति निर्देशः कृतस्तदनुसारं विज्ञायते यत् वर्णावृत्तिरसकृदपेक्ष्यते। स्वल्पान्तरवर्णविन्यासवक्रतायाः अपरः प्रकारोऽपि त्रिधा निर्दिष्टोऽस्ति कादयो मावसानाः स्पर्शवर्णाः, वर्गान्तयोगिनो यदि पुनः पुनः प्रयुज्यन्ते तदा स्वल्पान्तरा वर्ण-विन्यास-वक्रता विशिष्टां विच्छित्तिमावहति। एवमेव त-ल-नादीनां वर्णानां द्विरुक्तताऽपि वर्ण-विन्यासवक्रता विच्छित्तिविशेषमादधाति। तथा च रकार सकारादियुक्तवर्णानां पौनः पुन्येन प्रयोगेणापि स्वल्पान्तरायां वर्ण-विन्यास-वक्रतायाः विच्छित्तिविशेषः सम्पद्यते। व्यवधानरहित-वर्णावृत्तिरूपावर्ण-विन्यास-वक्रताऽप्येकवर्णावृत्ति-विषयिणी, वर्णद्वयावृत्तिविषयिणी बहुवर्णावृत्तिविषयिणी च सम्भवति। सा चेयं व्यवधानरहिता वर्णविशेषावृत्तिः समानस्वरसंयोगवती तथा चासमानस्वरसंयोगवती द्विधा भवितुमर्हति। परन्तु स्वभिन्नतायां हि व्यावधानरहितवर्णावृत्तिस्वरूपा वर्णविन्यासवक्रता सविशेषं शोभते। पूर्वं स्वल्पान्तरवर्णावृत्तिरूपवक्रताविषये त-ल-नादीनां वर्णानां द्विरूक्तिगता वक्रता प्रकाशिता, सा तु स्वर-संयोगाभावे वर्ण-विशेषाणामावृत्तिं सूचयति। अर्थात् स्वरव्यवधानं प्रसङ्गेऽस्मिन् नैव चिन्त्यते। सत्यपि स्वरव्यवधाने व्यंजनात्मवृत्तिर्व्यवधानरहिताऽऽवृत्तिमता। स्वरसंयोगाभावे वर्णविशेषस्य पुनः प्रयोगे वर्ण-द्विरुक्तिर्मता। अर्थात् व्यंजनान्तराणां व्यवधानाभाव एव व्यवधानरहितायां वर्ण-विन्यास-पुनरावृत्तौ मन्यते, न तु स्वरव्यवधानं गण्यते। अत्र स्वल्पान्तरवर्णावृत्तिः व्यवधानरहितवर्णावृत्तिश्च विवेचयता कुन्तकाचार्येण वर्ण-विन्यासवक्रतायां पूर्वाचार्यप्रस्तुता अनुप्रासभेदविशेषचमत्कारायमलङ्कारस्य च चमत्कारविशेषाः समाहिताः सन्तीति विद्वांसः स्वीकुर्वन्ति। कुन्तकाचार्यनिर्दिष्टकारिकाणां निम्नालिखिताः दशभेदाः विज्ञायन्ते-

1) असंयुक्तस्यैकवर्णस्य स्वल्पान्तरावृत्तिः।
2) असंयुक्तवर्णयोः स्वल्पान्तरावृत्तिः।
3) असंयुक्तानां बहूनां व्यंजनानां स्वल्पान्तरावृत्तिः।
4) वर्गान्तयोगिनः स्पर्शवर्णस्य स्वल्पान्तरावृत्तिः।
5) स्वसंयोगवद्वर्णविशेषस्य स्वल्पान्तरावृत्तिः
6) रेफादिसंयुक्तवर्णविशेषस्य स्वल्पान्तरावृत्तिः।
7) व्यवधानरहितैकवर्णावृत्तिः।
8) अव्यवहितवर्णद्वयावृत्तिः
9) अव्यवहितबहुवर्णावृत्तिः।
10) अन्यार्थबोधनपरायाः समानस्वरवत्या व्यंजनसंहतेरावृत्तिः।

दशविध वर्णविन्यासवक्रतासु प्राथमिकनवसु-वक्रतासु तु स्वराणामावृत्तिर्नैवापेक्ष्यते, परन्तु तत्रान्तिमे वर्णविन्यासवक्रताभेदे व्यंजनानां वर्णानामावृत्या सह स्वराणामपि तेनैव क्रमेण पुनः पुनः प्रयोगोऽपेक्ष्यते। वेणीसंहारनाट्यमाश्रित्य एतेषां विविधभेदानामुदाहरणान्यत्र प्रस्तूयन्ते। वेणीसंहारनाटकं भट्टनारायणस्य एकमात्रं कृतिरस्ति। यत्र षडांकाः सन्ति। अस्योपजीव्यः ग्रंथोऽस्ति महाभारतम्।

**वेणीसंहारे वर्णविन्यासवक्रता -**

**1. असंयुक्तस्यैकवर्णस्य स्वल्पान्तरावृत्तिः**

वेणीसंहारनाटके वक्रोक्तेरस्य प्रथमभेदस्य अनेकान्युदाहरणानि सन्ति। यथा-

**युष्माह्लेपयति क्रोधाल्लोके शत्रुकुलक्षय।**
**न लज्जयति दाराणां सभायां केशकर्षणम्॥**[१]

अस्मिन् श्लोके 'क' वर्णस्य स्वल्पान्तरेऽऽवृत्तिर्भवति एवञ्च-

**तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम्।**[२]

एवञ्च-

**भग्नं भीमेन भवतो मरूता रथकेतनम्।**[३]

अत्र 'म' भवर्णयोः आवृत्तिः स्पष्टं दृष्टिगोचरी भवति।

**2. असंयुक्तवर्णयोः स्वल्पान्तरावृत्तिः**

यथा-

**हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।**
**या श्लाघा पाण्डुपुत्राणां सैवाऽस्माकं भविष्यति॥**[४]

अत्र 'त' 'प' वर्णयोः आवृत्तिर्भवति।

**3. असंयुक्तानां बहूनां व्यंजनानां स्वल्पान्तरावृत्तिः**

यथा-

**गुप्त्यां साक्षान्महानल्पः स्वयमन्येन वा कृतः।**
**करोति महतीं प्रीतिमपकारोऽपकारिषु॥**[५]

अत्र क, र, प, त वर्णानां स्वल्पान्तरावृत्तिः भवति।

---

१ वे. सं. १/१७
२ वे. सं. १/२३
३ वे. सं. २/२४
४ वे. सं. २/४
५ वे. सं. २/३

4. **वर्गान्तयोगिनः स्पर्शवर्णस्य स्वल्पान्तरावृत्तिः**

यथा -

**सङ्ग्रामैकार्णवान्तः पयसि विचरितुं पण्डिताः पाण्डुपुत्राः।**[१]

अत्र 'ण्ड' वर्णस्यावृत्तिः। एवञ्च -

**एह्यस्मदर्थहततात! परिष्वजस्व,**

**क्लान्तैरिदं मम निरन्तरमङ्गमङ्गैः।**[२]

अत्र 'न्त', 'ङ्ग' वर्णयोः आवृत्तिः स्पष्टं दृश्यते।

5. **स्वसंयोगवद्वर्णविशेषस्य स्वल्पान्तरावृत्तिः**

यथा -

**गृहीतं येनासी परिभवभयान्नोचितमपि,**

**प्रभावाद्यस्याऽसीन्न खलु तव कश्चिन्नविषयः।**

**परित्यक्त येन त्वमसि सुतशोकान्न तु भयाद्,**

**विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते।।**[३]

अत्र 'न्न' वर्णस्यावृत्तिर्भवति येन श्लोके चमत्कारस्य प्रतितिर्भवति।

6. **रेफादिसंयुक्तवर्णविशेषस्य स्वल्पान्तरावृत्तिः**

यथा -

**प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरूभि-**

**र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।**[४]

अस्मिन् पद्यांशे रेफस्य 'न' वर्णेन सह संयोजनम् अस्ति तस्य च आवृत्तिर्भवति। एवञ्च -

**निवीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम्।**

**यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना।।**[५]

---

१ वे. सं. १/२७

२ वे. सं. ३/२९

३ वे. सं. ३/१९

४ वे. सं. १/१०

५ वे. सं. ३/३६

श्लोकेऽस्मिन् 'य' वर्णेन सह रेफस्यावृत्तिश्चमत्कारं जनयति।

**7. व्यवधानरहितैकवर्णस्यावृत्तिः**

एकवर्णस्यावृत्तिः यत्र विना व्यवधानेन भवति तत्र इयं वक्रता भवति। यथा-

**स्मितमधुरमुदारं देवि! मामालपोच्चैः।**
**प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्।।**[१]

एवञ्च -

**न्यस्ता न भ्रुकुटिर्न वाष्पसलिलैराच्छादिते लोचने।**
**नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः।**[२]

प्रथमश्लोके 'म' वर्णस्य एवं द्वितीयेऽस्मिन् 'न' वर्णस्य विना व्यवधानेन आवृत्तिः भिन्नं चमत्कारमुत्पादयति।

**8. अव्यवहित-द्वयोः वर्णयोः आवृत्तिः**

विना व्यवधानेन द्वयोः वर्णयोः आवत्त्या यत्र चमत्कारो भवति। यथा-

**सन्त्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ च।**[३]

एवञ्च-

**लोलांशुकस्य पवनाकुलितांशुकान्तं**
**त्वद्दृष्टिहारि मम लोचनबान्धवस्य।**
**अध्यासितुं तव चिरं जघनस्थलस्य**
**पर्याप्तमेव करभोरू। ममोरूयुग्मम्।।**[४]

इदृशमत्र श्लोकद्वयोः त, म, ल, म वर्णनामावृत्तिः आनन्ददायकः भवति।

**9. अव्यवहितबहुवर्णावृत्तिः**

अर्थात् अव्यवधानेन बहूनां वर्णानामावृत्तिः यत्र भवति तत्र इयम् अव्यवहितबहुवर्णावृत्तिः वक्रता भवति। यथा-

---

१ वे. सं. २/१६
२ वे. सं. २/३०
३ वे. सं. ४/१३
४ वे. सं. २/२३

**दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्काः,**
**वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः।**
**छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः,**
**पापं पापाः कथयत कथं? शौर्यराशेः पितुर्मे॥**[१]

अतः अनेन स्पष्टं भवति औचित्येन वर्णानामावृत्तिर्भवति यत्र तत्र सहृदयस्य हृदये आनन्दस्य प्राप्तिर्भवति। यथा अत्र अस्मिन् श्लोके दृश्यते।

**10. अन्यार्थबोधनपरायाः समानस्वरवत्याव्यंजनसंहतेरावृत्तिः**

(यमकालंकारः) अस्मिन् यथा यमकालंकारे भवति–

**'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः'**[२]

यत्र अर्थस्तु भिन्नः भवति परं वर्णानामावृत्तिः भवति। यथा–

**शल्येन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम्।**
**शून्यं कर्णस्य रथं मनोरथमिवाधिरुढेन॥**[३]

'शल्येन' शब्दस्यावृत्तिर्भवत्यत्र एवमुभयोरर्थः भिन्नोऽस्ति। प्रथमशल्यशब्दस्यार्थो भवति शल्यं-विषबाणं तेन शल्येन-विषबाणेन, एवं द्वितीयशल्य-शब्दस्यार्थो भवति-कर्णसारथिना। एवञ्च-

**अयि कर्ण! कर्णसुखदां प्रयच्छ मे,**
**गिरमुद्गिरिन्निव मुदं मयि स्थिराम्।**
**सतताऽवियुक्तमकृताऽप्रियं कथं**
**वृषसेनवत्सल! विहाय यासि माम्॥**[४]

श्लोकपठनमात्रेण ज्ञानं भवति यद् अत्र 'कर्ण' शब्दस्यावृत्तिर्भवति प्रथम कर्णस्य अर्थो भवति अङ्गराजः, द्वितीयकर्णशब्दस्यार्थः भवति श्रोत्रम्।

इत्थं यदा कविः वर्णानां संयोजनं करोति, तु तेन निश्चयेन काव्ये चमत्कारस्य सृष्टिर्भवति। अस्मिन्नेवार्थे वर्णगतचमत्कारः कुन्तकस्याभीष्टोऽस्ति।

---

१ वे. सं. ३/९
२ सा. द. ९/९३
३ वे. सं. ५/११
४ वे. सं. ५/१४

# ऋग्वेद के अध्ययन में पाश्चात्य व्याख्याकारों का योगदान

डॉ. (श्रीमति) उषा शुक्ला

जब हम साहित्यिक दृष्टि से प्राचीनता की बात करते हैं तो सर्वप्रथम ऋग्वेद का नाम आता है, जिसे हम कहीं भी पाँच हजार वर्ष पूर्व से लेकर साठ हजार वर्ष पूर्व तक स्थापित करते हैं। वस्तुतः वेद अपौरुषेय है जो सृष्टि के आदि से है एवं अन्तर्हित है। ऐसी गरिमामयी वाणी को समझने की चेष्टा भी उतनी ही पुरानी है जितना कि वेद। इसके विषय में भी वेद के प्रवर्तनकाल से ही प्रश्न उठने लगा था तभी तो नासदीयसूक्त का उद्घोष है कि-

**को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।**
**अर्वाग्देवा अस्य विसर्जनेनाऽथाको वेद यत आबभूव॥[१]**

लेकिन वेदार्थ के प्रति रुचि भी उतनी ही पुरानी है, जितनी वेद की सत्ता। यद्यपि मौखिक परम्परा का अनुगमन करते हुये वेद की सत्ता उसी तरह से आज वर्तमान है जितनी पूर्व में थी लेकिन वेदार्थ की प्रक्रिया के प्रयास का प्रारम्भ हमें सर्वप्रथम महर्षि शाकल्य के पदपाठ में प्राप्त होता है और दूसरा भाषाशास्त्रीय प्रयास महर्षि यास्क के निरुक्त के माध्यम से है। आचार्य यास्क स्वयं नैरुक्त सम्प्रदाय का उल्लेख करते हुये २८ आचार्यों का परिचय देते हैं। इस सन्दर्भ से हमें महर्षि यास्क के पूर्ववर्ती विद्वानों द्वारा की गई वेदार्थ प्रक्रिया की प्राचीनता का आभास मिलता है। शनैः शनैः हमारे प्राचीन आचार्यों की दृष्टि इस ओर बढ़ती गई और पाँचवी शताब्दी ई० तक आते-आते हमें वेद के अन्य व्याख्याकारों से परिचय होने लगा। स्कन्द, नारायण, उद्गीथ के साथ जो परम्परा प्रारम्भ हुई उसे माधव एवं आचार्य सायण ने पराकष्ठा पर पहुँचा दिया। इसके बाद भी भारतीय परम्परा में वेद के अर्थों का निर्णय, आध्यात्मिक व्याख्या के साथ-साथ वैज्ञानिक व्याख्या के हेतु भी किया जाता रहा है।

इस तरह से वेद-व्याख्या की भारतीय परम्परा का एक सोपान तैय्यार हुआ जो महर्षि पाणिनि के व्याकरण एवं आचार्य यास्क के निरुक्त का आश्रय लेकर आगे बढ़ा। वस्तुतः वेदार्थ, वेदाङ्ग के माध्यम से ही किया जा सकता है।

इसी सातत्य में एक नवीन पद्धति का विकास हुआ, जिसमें व्याकरण एवं निरुक्त की प्रधानता तो थी ही, उसके साथ-साथ तुलनात्मक भाषा-विज्ञान को भी सम्मिलित किया गया जिसके

1. ऋ० १०-१२९-६

मुख्य प्रणेता हमारे पाश्चात्य व्याख्याकार हैं, जिनमें मुख्य रूप से प्रोफेसर रूडाल्फ रोठ, ब्योत्लिंक, एच० ग्रासमान, के० एफ० गेल्डनर, लुडविग, ए० ए० मैक्डॉनल एफ० माक्समूलर, एच० एच० विल्सन, हरमान ओल्डेनबर्ग, आर० टी० एच० ग्रिफिथ एवं प्रो० पाउल थीमे आदि का नाम लिया जा सकता है। इस परम्परा के विकास की कहानी भी उतनी ही रोचक है जितना कि यह विषय। भारत में ईस्ट इण्डिया कम्पनी की स्थापना एवं कालान्तर में ब्रिटिश राज्य की संप्रभुता में यहाँ का शासन चलाना भी कठिन हो रहा था एवं साथ ही न्याय प्रक्रिया को यहाँ के परिवेश के अनुसार चलाना समस्या मूलक था। इस परिस्थिति में लार्ड मैकाले का यह सुझाव था कि भारतीयता की जो प्रमुख विशेषता है, वह है यहाँ के लोगों का अपना परम्परा एवं ज्ञान के प्रति अटूट निष्ठा। यदि इसे परिवर्तित करके पाश्चात्य परम्परा एवं ज्ञान को श्रेष्ठतम रूप में प्रस्तुत किया जाय तो धीरे-धीरे भारत में पाश्चात्य परम्परायें एवं ज्ञान प्रवर्धित होकर, प्रतिष्ठित हो जायेंगी। लार्ड मैकाले का यह सुझाव काम आया एवं कुछ विद्वानों का भारतीय धर्म एवं दर्शन के प्रति रूझान इसके कारण कम हुआ। किन्तु इसके साथ ही कुछ ऐसे भी विद्वान आगे आये जो वास्तव में भारतीय विद्या के प्रति आदर भाव रखते थे, जिनका कि उल्लेख यहाँ किया जा रहा है।

इस शृंखला में पहला कार्य एशियाटिक सोसाइटी आफ बंगाल की स्थापना के साथ प्रारम्भ हुआ, जिसका श्रेय निश्चित रूप से सर विलियम जोन्स (१७४६-९४) को जाता है। इसी समय १७८५ ई० में चार्ल्स विल्किन्स ने श्रीमद्भगवद्गीता का अंग्रेजी भाषा में अनुवाद किया। इस समय जो कार्य प्रारम्भ किये गये, उनमें मुख्य रूप से भारतीय पण्डितों ने इन विद्वानों को सहयोग प्रदान किया। यद्यपि यूरोपीय विद्वानों की रुचि इस ओर १८वीं शती के अन्तिम चरण से प्रारम्भ होती है लेकिन दक्षिण-पूर्व एशिया के देशों में भारतीय विद्या का प्रचार-प्रसार छठीं शताब्दी ई०पू० में ही प्रारम्भ हो गया था। यद्यपि उनकी रुचि वैदिक वाङ्मय के अध्ययन में कम ही थी। इस क्रम में १८०५ में कोलब्रुक ने **'एशियाटिक रिसर्चेज'** नामक शोधपत्रिका में वेद के ऊपर एक निबन्ध प्रकाशित किया, जिसमें सम्पूर्ण वैदिक वाङ्मय के ऊपर प्रकाश डाला गया। इसके साथ ही कोलब्रुक ने वैदिक वाङ्मय से सम्बन्धित पाण्डुलिपियों को संगृहीत करके लन्दन भेजना प्रारम्भ किया, जिसके कारण वहाँ के विद्वानों को इसे अच्छी तरह समझने के लिये भारत आना पड़ा। इस शृंखला में स्टीवेन्स एवं डॉ० रोर प्रमुख हैं, जिनका पहली बार क्रमशः ऋग्वेद के प्रथम अष्टक के तृतीय अध्याय के तृतीयसूक्त एवं प्रथम अष्टक के दो अध्यायों पर अनुवाद प्राप्त होता है। इन दोनों अनुवादों का प्रकाशन भारत में ही हुआ। यूरोप में वैदिक ग्रन्थों के पदार्पण का श्रेय एब्वे विन्यों (Abbe Vignon) को दिया जा सकता है जो कालेज द फ्रान्स के पुस्तकालयाध्यक्ष थे। उन्होंने भारतीय हस्तलेख संग्रह को यूरोपीय विद्वद् समुदाय के बीच में प्रस्तुत किया। यही संग्रह कालमेत (Calmette) तथा बेश्ची (Beschi) के द्वारा समृद्ध किया गया। कालमेत ने पहली बार दक्षिण भारत से वैदिक संहिताओं के हस्तलेख प्राप्त किये तथा इनकी खोज के लिये मिशनरियों एवं पादरियों से सहयोग की प्रार्थना भी की। इसी क्रम में पोन्स (Pons) ने १७३७ ई० में ८७ पाण्डुलिपियों का एक संग्रह फ्रान्स भेजा जिसमें ऋग्वेद पर तेलगु भाषा में एक पाण्डुलिपि भी थी।

जर्मन विद्वान फ्रीडरिख् रोज़ेन (Friedrich Rosen) ने लन्दन में संगृहीत वैदिक हस्तलेखों की उपयोगिता को समझा और ऋग्वेद का सम्पादन कार्य प्रारम्भ किया। दुर्भाग्यवश १२ सितम्बर, १८३७ में उनके स्वर्गवास के अनन्तर यह कार्य रुक गया। यद्यपि एक वर्ष के अन्दर ही प्रथम अष्टक पर लैटिन भाषा में अनुवाद के साथ उनका यह प्रारम्भिक कार्य प्रकाशित हुआ। रोजेन के पश्चात् लुई लाँगल्वा (Longlois) ने ऋग्वेद के चार अष्टकों का फ्रेंच भाषा में अनुवाद किया। रोजेन एवं लुई की अनुवाद पद्धतियाँ एक दूसरे से विपरीत थी। लुई ने अपने अनुवाद में ऋग्वेद के पारम्परिक भाष्यकारों की पाण्डुलिपियों का आश्रय लेकर इस कार्य को आगे बढ़ाया था।

यूरोपीय विद्वानों को इस कार्य में भारतीय पण्डितों एवं सायण-भाष्य से सहायता मिल रही थी लेकिन एक स्वतन्त्र चिन्तन की परम्परा का विकास भी हुआ। इनमें प्रोफेसर बेरन्यूफ़ के शिष्यों विशेष रूप से प्रोफेसर रुडाल्फ रोठ, ब्योत्लिंक, एच० ग्रासमान, के० एफ० गेल्डनर, लुडविग, ए० ए० मैक्डॉनेल, एवं एफ० माक्सम्युलर का योगदान प्रमुख है और यहीं से वेदार्थ प्रक्रिया को समझने के लिये तुलनात्मक भाषा-विज्ञान का प्रयोग प्रारम्भ हुआ। इन विद्वानों ने संस्कृत भाषा को ग्रीक, लैटिन तथा जर्मन आदि अन्य यूरोपीय भाषाओं के साथ तुलना कर यह सिद्धान्त प्रतिपादित किया कि इस तुलनात्मक दृष्टि के द्वारा वेद के अर्थ को अच्छी तरह से समझा जा सकता है। प्रोफेसर रुडाल्फ रोठ एवं एफ० माक्सम्युलर द्वारा प्रतिपादित इस नवीन प्रयोग से एक क्रान्तिकारी मार्ग का सूत्रपात हुआ।

१८४४ का वर्ष पाश्चात्य जगत् में वैदिक अध्ययन के क्षेत्र में हमेशा स्मरणीय रहेगा जब (Rudolph Roth-1821-95) रुडाल्फ रोठ ने ऋग्वेद की एक हस्तलिखित प्रति के आधार पर ७५ सूक्तों के संग्रह पर एक पुस्तक का प्रकाशन किया। यह पुस्तक- "Zur Literatur und geschichte der Veda Abhandlungen" (A treatise on the Literatare and history of the Veda) के नाम से १९४६ में प्रकाशित हुई। लगभग पचास वर्ष बाद प्रो० ए० केगी अपनी पुस्तक 'दि ऋग्वेद' में जिसका प्रकाशन गिन एण्ड कम्पनी लन्दन से हुआ था, उल्लेख करते हैं कि इस ग्रन्थ ने वेदाध्ययन के क्षेत्र में एक क्रान्ति ला दी, जिससे प्रवृत्त होकर संस्कृत के विद्वान वेदाध्ययन की ओर प्रभावित हुये। प्रो० बेरन्यूफ. के इस शिष्य ने अपना कार्य यहीं तक ही नहीं सीमित रखा वरन् ब्योत्लिंक (Otto Bohtlingk, 1815-1904) के साथ मिलकर Sanskrit Wörterbuch का प्रणयन किया जो सात भागों में है और जिसका प्रकाशन १८५२ से १८५७ के मध्य सेण्ट पीटर्सबर्ग से हुआ । अब यह ग्रन्थ मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली के यहाँ भी उपलब्ध है। इस ग्रन्थ की इतनी सराहना हुई कि यह पुस्तक अपने नाम से नहीं बल्कि प्रकाशन स्थान से अर्थात् 'सेण्ट पीटर्सबर्ग डिक्शनरी' के नाम से ही विख्यात हुई। प्रो०ए०एल० बाशम लिखते हैं कि- The Sanskrit Wörterbuch by Otto von Böhtlingk and Rudolph Von Roth remain unsurpassed even more than hundred years of its first publication. प्रोफेसर रोठ यद्यपि आचार्य सायण की परम्परागत वेदव्याख्या को सम्यक् नही मानते परन्तु यह स्वीकार करते हैं कि जहाँ तक भारतीय धर्म एवं उपासना का सम्बन्ध है, इन भाष्यकारों से बढ़कर कोई दूसरा मार्गदर्शक नहीं है।

लेकिन उनका मानना था कि, भाषा–विज्ञान, धर्म आदि के तुलनात्मक अध्ययन के आधार पर वेद की व्याख्या सायण से अधिक अच्छे ढंग से की जा सकती है। साथ ही उन्होंने यह भी स्वीकार किया है कि– यह प्रयास एक बार में नही किया जा सकता है और न ही एक व्यक्ति के द्वारा पूर्ण किया जा सकता है। उनकी दृष्टि में समान भाव वाले समस्त वाक्यों एवं शब्दों को एक साथ रखकर उनकी पारस्परिक तुलना के द्वारा उनमें निहित मूल भावों को निकालना अच्छा मार्ग है। भले ही रोठ, सायण के भाष्यों से पूर्ण सहमत न हों किन्तु इस बृहद् शब्दकोष के निर्माण में सायण–भाष्य से सहायता ली गई है। प्रो० रोठ के योगदान का अनुमान हम इसी बात से लगा सकते हैं कि वैदिक संहिताओं के हस्तलेखों के सहारे उन्होंने यह विशाल कार्य न केवल पूर्ण किया बल्कि आने वाले अध्येताओं के लिये ये व्याख्याएँ मार्गदर्शक के रूप में आज भी उतने ही प्रासंगिक है जितना कि उस समय थीं। वस्तुतः इसके बाद के सभी शब्दकोष, इस शब्द कोष की उपज के रूप में स्वीकार किये जा सकते हैं। इससे सिद्ध होता है कि उन्होंने अधिकांश अर्थ सायण द्वारा प्रदत्त अर्थों के आधार पर ही किया है।

रोठ के समय में वैदिक संहिताओं का प्रकाशन पुस्तक के रूप में नहीं था। सर्वप्रथम वेद का सम्पादन कार्य माक्सम्यूलर ने अपने कुछ सहयोगियों के साथ इग्लैण्ड में १८४० के आस पास प्रारम्भ किया और ऋग्वेद का प्रथम भाग सायणभाष्य सहित १८४८ में प्रकाशित हुआ। १८७५ ई. तक लगभग २६ वर्षों में ६ भागों में सम्पूर्ण ऋग्वेद प्रकाश में आया। माक्सम्यूलर भी बेरन्यूफ के ही शिष्य थे। रोठ की तरह यह सायण के विरोधी नहीं थे। इनके मत में सायण के पूर्ववर्ती वेदव्याख्यान की जो परम्परा थी वह त्रुटिपूर्ण थी। माक्सम्यूलर सायण की उपयोगिता एवं महत्ता को सर्वोपरि मानते थे। उनके मत में सायण की व्याख्यापद्धति इस बात की स्वतंत्रता नहीं देती कि वह कोई स्वतन्त्र व्याख्या स्वीकार करें जिसको तुलनात्मक अध्ययन के द्वारा आज का वेदव्याख्याकार प्राप्त कर सकता है। अपने इस सम्पादन के साथ माक्सम्यूलर ने अन्य भी बहुत से कार्य किये जिनमें Sacred Book of the East का ५० भागों में प्रकाशन इस क्षेत्र की बहुत बड़ी उपलब्धि है। साथ ही वैदिक भाषा धर्म इत्यादि का अनुसन्धान भी माक्सम्यूलर के कार्यों में महत्त्व रखते हैं। इस प्रकार माक्सम्यूलर ने अपने इस सराहनीय कार्य से भारत की प्राचीन विरासत से पाश्चात्य देशों को भलीभाँति परिचित करवाया। माक्सम्यूलर ने सेक्रेड बुक्स ऑफ द इस्ट सीरीज भाग–३२ की भूमिका में सायण के प्रति अपनी कृतज्ञता ज्ञापित की है और लिखा है कि भारतीय परम्परा में प्रचलित और सायणभाष्य में सुरक्षित वेदों की परम्परागत व्याख्या के महत्त्व पर मैंने कभी भी अतिशयोक्तिपूर्ण विचार व्यक्त नहीं किया है। सायण के मार्गदर्शन को समस्त वैदिकों को ऋणी कहा है। वैदिक भाषा तथा वैदिक धर्म में प्रवेश पाने के लिए हमे सायण का ही मार्गदर्शन स्वीकार करना पड़ता है।

डॉ. रोठ की पद्धति प्रो. बेरन्यूफ. के मत की अनुगामिनी थी। उन्होंने भारतीय वेदव्याख्या पद्धति की आलोचना की और तुलनात्मक भाषाविज्ञान पद्धति को महत्त्व दिया है। उन्होंने लिखा है कि वैदिक मंत्रों की रचना से लेकर भाष्यकारों के समय तक कोई परम्परा कहीं नहीं मिलती

है। दोनों के बीच में एक लम्बा विच्छेद दिखाई पड़ता है। भाष्यकारों को जो विशेष सामग्री उपलब्ध हुई होगी वह संस्कृत भाषा का प्रयोग, शब्दों के व्याकरण एवं निर्वचनात्मक कोष, जो आज भी हमें उपलब्ध हैं। उन्हें लौकिक संस्कृत भाषा के साहित्य में सुरक्षित सामग्री से जो कुछ सहायता मिली होगी, वह भी अवेस्ता की तुलना में कम है। आज संस्कृत के समकक्ष अन्य भारोपीय भाषाओं की तुलना से भी हमें कुछ सामग्री प्राप्त हो सकती है जो वेद को समझने के लिए आवश्यक है[१]। इसी मान्यता के लुडविग तथा ग्रासमान हुए। इन दोनों ने भी रोठ की ही पद्धति का अनुसरण करते हुए जर्मन भाषा में ऋग्वेद का अनुवाद किया। लुडविग का ऋग्वेद का जर्मन अनुवाद और उसकी व्यख्या १८७६ में जर्मनी में ५ भागों में प्रकाशित हुई। इसी काल में ही ग्रासमान द्वारा किया गया ऋग्वेद का पद्यात्मक अनुवाद दो भागों में प्रकाशित हुआ। उनका यह अनुवाद भी इतना लोकप्रिय नहीं हो सका, किन्तु उनके द्वारा प्रकाशित ऋग्वेद का शब्द कोष (Wörterbuch zum Rigveda) आज भी अपने ढंग का एक अद्भुत कार्य है। ऋग्वेद के समस्त शब्दों का सन्दर्भ सहित अर्थ देकर उन्होंने अनुसन्धान कार्य को आगे बढ़ाया। १८७२ में प्रकाशित यह ग्रन्थ आज भी उतना ही महत्त्वपूर्ण है, जितना प्रकाशन के समय में था। ऋग्वेद सम्बन्धी कोई भी शोध कार्य इस पर दृष्टिपात किये बिना अधूरा है।

ग्रासमान के अनुवाद के पूर्व माक्सम्यूलर के द्वारा ऋग्वेद के समस्त मरुत सूक्तों का अनुवाद व्याख्या सहित किया गया, जो सेक्रेड बुक्स आव द ईस्ट के ३२वें भाग में १८६३ में प्रकाशित हुआ। यह अनुवाद आज भी अपना स्थान बनाये हुए है। माक्सम्यूलर द्वारा दी गयी दीर्घ भूमिका में ऋग्वेद की व्याख्या से सम्बन्धित अनेक समस्याओं का समाधान किया गया है। व्याख्यात्मक टिप्पणियाँ भी व्याख्या के क्षेत्र में महत्त्वपूर्ण हैं। समस्त सन्दर्भों को एकत्रित कर तुलनात्मकरूप से व्याख्या करने का मार्ग माक्सम्यूलर ने बड़े अच्छे ढंग से प्रदर्शित किया है।

माक्सम्यूलर के ही कार्यकाल में ऋग्वेद के अनुवाद का कार्य भी महत्त्वपूर्णरूप से संपन्न होने लगा। यूरोप में वेदाध्ययन तथा वेदव्याख्या के क्षेत्र में जो दूसरी विचारधारा चली उसमें भारतीय परम्परा को महत्त्व दिया गया। इस विचारधारा को सम्पादित करने का श्रेय एच.एच.विल्सन को जाता है। ईस्ट इण्डिया कम्पनी के द्वारा जब माक्सम्यूलर को सम्मानित किया गया, उसी समय विल्सन ने सम्पूर्ण ऋग्वेद पर अंग्रेजी अनुवाद करने का विचार किया। भारत छोड़ने के पूर्व वह यह कार्य शुरू कर चुके थे और काफी प्रगति भी हो चुकी थी।

विल्सन से पूर्व स्टिवेन्सन, रोयर, रोजेन तथा लाँगलुईस् के अनुवाद ऋग्वेद के कुछ अंशों पर प्रकाशित हो चुके थे किन्तु विलसन की दृष्टि में वे प्रामाणिक नहीं थे। उनकी दृष्टि में अनुवाद का वास्तविक महत्त्व प्राचीन हिन्दू धर्म की उपासना पद्धति तथा सामाजिक संगठन को कितना और किस रूप से प्रस्तुत कर रहा है और जब तक उसकी भाषा को सुरक्षित न रखा जाय और उसको समझा न जाय; यदि इन सब बातों को ध्यान में रखते हुए कार्य करते हैं, तो प्राचीन भारतीय धर्म के विषय में, उनके तथ्यों तथा विचारों को सुरक्षित रख सकते हैं।

---

१. आन द इण्टर-प्रिटेशन आव द वेद, जे म्यूर

जहाँ एक ओर रोठ आदि विद्वान सायण के विरोधी थे वहीं विलसन ने सायण को आधार मानकर सम्पूर्ण ऋग्वेद का अनुवाद किया। मूल ऋग्वेद का अंग्रेजी में अनुवाद करने में विल्सन का यह प्रयत्न रहा है कि मूलभाव को अधिक से अधिक सुरक्षित रखा जा सके। विल्सन ने अपने अनुवाद में वेद के विभागों –संहिता, मण्डल, अष्टक, अध्याय, अनुवाक्, सूक्त और वर्ग का नाम सायण के अनुसार ही दिया है। उनके समान कोई अंग्रेजी का नाम नहीं दिया है। सायण के अनुसार प्रत्येक मंत्र के छन्दों का भी नाम दिया है।

प्रामाणिकता की दृष्टि से जिन विद्वानों ने सायणभाष्य पर आशंका जताई है उसके उत्तर में उनका कथन है कि –ऋग्वेद के विषय में सायण का ज्ञान यूरोपीयन विद्वानों से अधिक था और विरासत में मिली व्याख्या पद्धति का सायण को ज्ञान था। अपने ऋग्वेद अनुवाद के दूसरे भाग की भूमिका में भारतीय भाष्यकारों के व्याकरण सम्बन्धी ज्ञान की प्रामाणिकता पर विचार करते हुए उन्होंने यह मत प्रस्तुत किया है कि व्याकरण सम्बन्धी शब्द रचना को लेकर सही रूप से समझने के लिए जो कठिनाई होती है, उनका समाधान भारतीय भाष्यकार ही कर सकते हैं। ऐसे शब्दरूपों में संदेह स्वाभाविक है किन्तु प्रामाणिक नहीं है।

विल्सन का अनुवाद प्रामाणिकता की दृष्टि से अधिक महत्त्वपूर्ण माना जा सकता है। इसका कारण यह भी हो सकता है कि उनके सामने सायणभाष्य सहित ऋग्वेद का माक्सम्यूलर द्वारा सम्पादित प्रामाणिक संस्करण था। विल्सन ने अपने अनुवाद में सायण का ही अनुसरण किया है। सायण के विषय में उनका कथन है कि सायण मंत्र व्याख्या को सामान्य प्रचलित संस्कृत में करते हैं, यदि मन्त्र में किसी शब्द की या वाक्य की आवश्यकता है तो वह उसकी पूर्ति करते हैं। मन्त्र में आख्यान का संकेत मिलने पर सायण उसे विस्तृत कर देते हैं। सायण पाणिनि सूत्र का बार-बार उल्लेख कर व्याकरण सम्बन्धी समस्याओं का भी समाधान करते हैं। स्वरवैशिष्ट्य का भी ध्यान सायण रखते हैं। इसके लिए पाणिनि सूत्र को बार-बार उद्धृत करते हैं। प्रत्येक सूक्त के प्रारम्भ में प्रस्तावना भी दी जाती है। उसमें ऋषि, देवता तथा छन्द का उल्लेख भी सायण देते हैं। इसके लिए अनुक्रमणियों को उद्धृत करते हैं। प्रायः प्रस्तावना के अन्तर्गत ही सूक्तगत मन्त्रों का विनियोग भी बताते हैं। विनियोग की प्रामाणिकता के लिए श्रौतसूत्र आदि ग्रन्थों को भी उद्धृत करते हैं।[१]

विल्सन ने भारतीय वेदव्याख्याकारों के अर्थों पर संतुष्ट होने की बात को स्वीकार किया है। उनका कथन है कि सायण को अपने पूर्ववर्ती सभी व्याख्याओं का स्वयं ज्ञान था। सायण अपने अनुवाद में अपने पूर्ववर्ती सभी व्याख्याकारों तथा अपने समकालीन सभी परम्परागत व्याख्या पद्धतियों को स्थान दिया है। अपनी व्याख्या में यास्क के निरुक्त का भी बार-बार उल्लेख करते हैं।

विल्सन के अनुसार पाश्चात्य विद्वानों की व्याख्यापद्धति, जिनके सोचने की सामान्य प्रक्रिया भारतीय भाष्यकारों की व्याख्यापद्धति के समकक्ष प्रामाणिक होने की दावा नहीं कर सकती,

---

१. एच.एच.विल्सन, ऋग्वेद संहिता-भूमिका-भाग-१।

अधिक विवेकपूर्ण हो सकती है, किन्तु यह वह नहीं हो सकती जिसको भारतीय चिन्तकों ने शताब्दियों से स्वीकार किया है। ऐसे संदर्भों के व्याख्यान में पाश्चात्य व्याख्या अपूर्ण रही है। इस तथ्य का विल्सन ने उदाहरण भी दिया है। मन्त्रों में विशेष्य पद का लोप प्रायः वेदों में देखा जा सकता है और विशेषण, विशेष्य और विशेषण दोनों का कार्य करता है। ऋग्वेद के द्वितीय अष्टक के प्रथम मंत्र में **'रघुमन्यवः'** शब्द आया है जिसका अर्थ है 'अल्पक्रोध वाले'। किन्तु वे कौन हैं जिनके लिए यह प्रयोग किया गया है इसका उल्लेख मन्त्र में नहीं हुआ है। भाष्यकार सायण का कथन है कि यह शब्द 'ऋत्विजों' के लिए प्रयुक्त है जो नम्र स्वभाव के हैं। यह कल्पना एक साधारण उपज नहीं है।

इसी प्रकार में 'अपांनपात्'[१] की महिमा का वर्णन करने वाली **हिरण्यवर्णाः** तथा **'यह्वीः'** पद का प्रयोग किया गया है। विल्सन के अंनुसार पाश्चात्य वेद व्याख्याकार यह नहीं बता सकता कि यहाँ इन विशेषणों का क्या अभिप्राय है और किसके लिए प्रयुक्त हुए हैं। यहाँ केवल मूल लेखक ही बिना संशय के विश्वास के साथ बता सकता है कि इनका प्रयोग नदी के लिए किया गया है, और यही इसका परम्परागत अर्थ है। सायण स्पष्ट व्याख्या करते हैं **'यह्वीः यह्व्यः महत्यः हिरण्यवर्णाः नदीनामैतत्। हिरण्यवन्निर्मलरूपा नद्यः'**।

मन्त्र में अनेक स्थानों पर क्रिया के कर्म का और कर्ता का प्रायः लोप दिखाई पड़ता है –जैसे 'शिशीतमिन्द्रा पर्वता युवं न'[२] इन्द्र और पर्वत की एकसाथ स्तुति की गयी है कि 'वे हमारी ---- (?) तीक्ष्ण करें'। विल्सन के अनुसार यहाँ कर्मरूप पद की आवश्यकता है और इसकी पूर्ति के लिए एक पाश्चात्य विद्वान् भाला या तलवार की कल्पना कर सकता है क्योंकि इसे तीक्ष्ण किया जा सकता है। किन्तु इसके लिए सायण का आभारी होना चाहिये जिसके द्वारा उपयुक्त कर्म 'बुद्धि' की कल्पना कर रिक्त पद की पूर्ति की गयी है।

विल्सन के अनुसार वेद व्याख्या में एक कठिनाई और होती है –जहाँ किसी पद के द्वारा उस सम्पूर्ण वस्तु का बोध होने लगता है जिसके लिए वह वस्तु बनी है। एक मन्त्र है –**'तुभ्यं हिन्वानो वसिष्ट गा, अपोऽधुक्षन् सीम्, अविभिर् अर्द्रिभिर् नरः'**[३]।

इस मन्त्र में आहुति के रूप में गो का तथा भेड़ (अवि) द्वारा सोम को छान कर पवित्र करने का उल्लेख है। विल्सन का कथन है कि यहाँ पाश्चात्य विद्वान् 'गो' तथा 'अवि' का अनुवाद करने में संशय में पड़ सकता है किन्तु सायण इसका स्पष्ट उत्तर देते हैं कि 'गो' का अर्थ गाय नहीं गाय से उत्पन्न दूध, दधि या घृत (गाः गोविकाराणि दधीपयः प्रभृतीनि) तथा 'अवि' का अर्थ भेड़ नहीं बल्कि भेड़ के बाल से बना छनना जिससे सोम छाना जाता है। (अविभिः अवेर्बालमयैर्दशापवित्रैः) इसी प्रकार वेद मन्त्रों में आलंकारिक तथा प्रतीकात्मक शब्दों का भी प्रयोग

१. ऋग्वेद २.३५.९
२. ऋ. १.१२२.३
३. ऋ. २.३६.१।

होता है जिनका अनुवाद करना कठिन है। सायण ऐसे स्थलों पर हमारी सहायता करते हैं। इस प्रकार वेद व्याख्या के क्षेत्र में सायणभाष्य का ऋण स्वीकार करने में किसी को आपत्ति नहीं होनी चाहिये। विल्सन ने स्पष्ट रूप से इस बात को स्वीकार किया है कि वह सायण का बहुत बड़ा आभारी है। उसके बिना वह ऋग्वेद के अनुवाद का प्रयास नहीं कर सकते।[१]

१८६० ईस्वी में प्रोफेसर विल्सन की मृत्यु हो गयी। उनके ग्रन्थों का प्रकाशन उनके मृत्यु के पश्चात् उनके मार्ग पर चलने वाले एवं भारतीय परम्परा के प्रशंसक कुछ अन्य विद्वानों के द्वारा किया गया है। विल्सन के समय तक ऋग्वेद का अनुवाद चतुर्थ भाग के केवल १४४ पृष्ठ तक ही छपा था। सर्वप्रथम वैलेन्टाइन ने इस कार्य को आगे बढाया। वे ईस्ट इण्डिया ऑफिस लाईब्रेरी में विल्सन के उत्तराधिकारी थे। १८६४ में उनकी भी मृत्यु हो गयी। तत्पश्चात् गोल्डस्टुकर ने इस कार्य का उत्तरदायित्व लिया। विल्सन के समस्त ग्रन्थों का प्रकाशन उनकी मृत्यु के ३० वर्ष बाद हुआ। ये भी विल्सन के ही परम्परा के थे। इसके अनन्तर ई.बी. कावेल भी वैदिक साहित्य के अध्ययन के प्रति विशेष रुचिकर थे और विल्सन के साथ ऋग्वेद के अनुवाद पर उनका भी नाम आया। उनके मन में भी भारतीय परम्परा पद्धति का मान था और विल्सन का अनुवाद भारतीय परम्परा पर आधारित था। कावेल ने आक्सफोर्ड में विल्सन के कार्य की लगन को देखा था कि किस उत्साह से वे लिखते हैं और प्रकाशित करते जाते हैं। इन सब कारणों से उनके हृदय में विल्सन के प्रति अपार श्रद्धा और उनके कार्यों के प्रति झुकाव हुआ।

प्रोफेसर कावेल भारतीय परम्परा के इतने अधिक समर्थक थे कि यदि उन्हें विल्सन भी भारतीय परम्परा से दूर नज़र आये तो अनुवाद को तो जैसा था वैसा ही रहने दिया, किन्तु नीचे टिप्पणी में यह संकेत करते हैं कि विल्सन यहाँ भारतीय व्याख्याकरों की परम्परा का अनुगमन नहीं कर रहें हैं अच्छा यह है कि ऋग्वेद को हिन्दू जैसा समझते हैं वैसा ही रहने दिया जाये।

कावेल पाश्चात्य विद्वानों की व्याख्यापद्धति की अवहेलना तो नहीं करते किन्तु वेद की व्याख्या में भारतीय परम्परा को सहायक मानते हैं। उनके अनुसार ऋग्वेद के अध्ययन के क्षेत्र में जर्मनी के विद्वान रोठ का जो योगदान है वह स्मरणीय है।

विल्सन के अनुवाद के पञ्चम भाग की पाण्डुलिपि में अष्टम मण्डल के चौवालीसवें सूक्त के मध्य तक ही अनुवाद है और दशममण्डल का अनुवाद अधूरा है और नवम मण्डल पर एक टिप्पणी ही थी। कावेल के द्वारा अष्टम मण्डल का स्वतंत्र रूप से अनुवाद किया गया और वह प्रकाशित हुआ। तत्पश्चात् कावेल कैम्ब्रिज युनिवर्सिटी में संस्कृत के प्रोफेसर हो गये और इस कार्य की गति रुक गई। पुनः कावेल के शिष्य वेबस्टर ने इस कार्य को अग्रसारित किया और उसे पूरा किया। पञ्चम भाग १८८८ में प्रकाशित हुआ। इन्होंने भी विल्सन के अनुवाद को उसी रूप में स्वीकार किया जिस रूप में वह था। उनके मत में विल्सन के अनुवाद की यही विशिष्टता है

---

१. ऋग्वेद संहिता भाग–२, भूमिका पृ. २२ ।

